# सूचना.



आ ग्रंथ संस्कृतना अभ्यासी साधु साध्वीने तेमज श्राविकाने अने
पुस्तक भंडारने माटे मंगावनारने भावनगरना

**श्राविका समुदाय तरफथी भेट तरीके**

मोकलवामां आवशे.

श्री जैनधर्मप्रसारक सभा भावनगर तरफथी छपावनार

**शा० कुंवरजी आणंदजी.**

# प्रस्तावना.

विदांकुर्वन्तु विद्विद्विपावन्तः सन्तः शमामृतनिःस्यन्दोदन्वदुन्मज्जिष्णवः शान्तसुधारसनामाऽन्वर्थतामितोऽयं ग्रन्थो भव्यजनमनश्चारामोल्लासनामृतवर्ष इति । सुप्रसिद्धाश्चास्य प्रणेतारः पर्युषणपर्वपठ्यमानश्रीकल्पसूत्रसुखबोधिकाभिधटीकारचयितृत्वेनोपाध्यायोपाध्युपधारिणः श्रीमद्विनयविजयनामानः । मन्दमतिसत्त्वोपचिकीर्षया चैभिः पूज्यवरैः श्रीसिद्धहेमशब्दानुशासनान्तर्गतोपयुक्ततमसूत्रसन्दर्भमाकृष्य सन्ध्यादिप्रकरणानुक्रमेण व्याकृतं श्रीहेमलघुप्रक्रियाख्यं व्याकरणं पञ्चत्रिंशत्सहस्रश्लोकप्रमाणस्वोपज्ञटीकासमलङ्कृतं । द्रव्यानुयोगगणितानुयोगप्रकाशकलोकप्रकाशाख्यविंशतिसहस्रानुष्टुप्श्लोकप्रमितस्वग्रथितग्रन्थप्रकाशितप्रावीण्यानामपूर्ववैदुष्यवतामेषां सुविख्यातमनुयोगचतुष्टयगोचरं पाण्डित्यं । किं चैतच्छान्तसुधारसग्रन्थप्रतिष्ठितमैत्र्यादिभावनाचतुष्टयोपेतानित्यादिभावनाद्वादशकाभिधप्रस्तावषोडशकं गुर्जरभाषोचितविविधच्छन्दोभिरप्युपनिबद्धमपि सन्धिविभक्तिसमासादिदोषलेशवर्जितमिति चित्रीयन्ते चेतांसि चेतनावतां सुधियां संस्कृतवैषयिकतदपूर्ववैदुष्या, यद्वा किमाश्चर्यं नूतनव्याकरणव्याकर्तॄणां तादृशां गीर्वाणभाषासरसीसरभसक्रीडने ।

रचितोऽयं ग्रन्थः सं० १७२३ वर्षे खंभातसमीपवर्तिगन्धारनगरे श्रीविजयप्रभसूरिशासने । पूज्यपादाश्चेमे न्यायविशारदोपाध्यायपदभूषितश्रीयशोविजयसमकालीनाः, यतः काश्यामुभाविमौ सहाध्यायिनावास्तां, किं च सिद्धचक्रमाहात्म्यप्रतिपादकश्रीपालनृपरासकं संपूर्णमनिर्मायैवैते कालं कृतवन्तो विनयविजयोपाध्यायवराः समापयन्तश्च श्रीयशोविजयोपाध्यायाः ।

एतद्ग्रन्थप्रणेतृभिरन्येऽपि ग्रन्था ग्रथिता भविष्यन्तीति तर्कयामहे, परं न जानीम इत्यत्र तदुल्लेखलिखनासमर्था वयं । ग्रन्थान्तप्ररूपितप्रशस्त्यैव तत्पट्टपरंपराज्ञानसंभवाद्विरमामहे तदुल्लेखायासात् ।

उपयुक्ततमस्यास्योपर्येकापि टीका भूतपूर्वा नाभूदतो भव्यजीवोपकारकत्वेन मन्दमतिजनापेक्षितत्वेन च शान्तमूर्त्तिमुनिवरश्रीवृद्धिचन्द्रान्तेवासिपं० श्रीगंभीरविजयगणिभी रचितेयं टीकैतद्ग्रन्थोपन्यस्ता सं० १९६७ वर्षे । एतट्टीकाप्रत्याः सर्वत्र दुष्प्रापत्वेन प्रतिलेखनव्ययबाहुल्येनापि शुद्धत्वसंदेहत्वेन सुपत्रोपर्यङ्कनद्वारा प्राकट्यकरणं निर्णीतं संसदाऽल्पमूल्येन लाभदायकत्वं शुद्धत्वादिकं च विचार्य ।

मुद्रापणे चास्य गीर्वाणभाषाविदुष्याः साध्व्याः श्रीलाभश्रिया उपदेशेन भावपुरस्थश्राविकावर्गेणामुककार्यसञ्चितद्रव्यसमर्पणोदारता दर्शिता, संसदा च तत्स्वीकृत्य सटीको मुद्राप्य प्रकटितोऽयं । श्राविकावर्गहितायोत्तममुनिवराणां साध्वीनां पुस्तकभाण्डागाराणां चर्ते मूल्याद्युपदीकरिष्यते ।

ग्रन्थेऽस्मिन्नङ्कितुर्दृष्टुर्वा यत्किमपि स्खलितं दृष्टिगोचरं भवेच्छ्रीमतां विदुषां वाचकानां तदाधाय कृपां पत्रद्वारा निवेदनीयं संसदे यतो द्वितीयावृत्तिमुद्रापणवेलायां तच्छुद्धौ यत्येतेत्यर्थना क्षमायाचनपूर्वकं । शोधनेऽस्य संसच्छास्त्रिणा जेठालालशर्मणा हरिभाईतनुजेन कृतः प्रयासो यथाशक्त्यतस्तस्य धन्यवादं दद्महे । साध्व्याः श्रीलाभश्रिया उपदेशेनात्रत्यश्राविकावर्गस्येदृशो ज्ञानोपचयकार्ये प्रवृत्तिं द्रव्यव्ययं च दृष्ट्वा महोपकारं मन्यामहे शुद्धान्तःकरणेनास्या अन्वर्थनाम्याः साध्व्याः ।

पूज्याश्च टीकाकाराः पं० श्रीगंभीरविजयनामानोऽवोद्धृणसमाप्तेरस्मिन्नेव वर्षे पौपकृष्णाष्टम्यां रात्रौ कालधर्मं प्राप्य स्वर्गमगमन्नित्यत्र स्थाने स्थानेऽस्माकं शोकप्रदर्शनं । ग्रन्थमिमं प्रकाशितं दिदृक्षवोऽप्येते पूज्या द्रष्टुं नाशकंस्तथापि तदिच्छानुसारेण मुद्रितं तच्छास्त्रं लभमानान् भव्यांश्च दृष्ट्वा स्वात्मनः स्वास्थ्यं लप्स्यन्त इति तर्कयित्वैषा लघ्वी प्रस्तावना समाप्यते । परमात्मा तदात्मनः शान्तिं वितनुतात्, तेषां चैतट्टीकारचनप्रशस्तप्रयासोऽस्मन्मुमुक्षायासश्च फलेग्रहिर्भूयादिति । तथास्तु ॥

ज्येष्ठशुक्लप्रतिपद्.
संवत् १९६९.

श्रीजैनधर्मप्रसारकसभा.
भावनगर.

---

## प्रस्तावनानुं गुजराती भाषांतर

आ शांतसुधारस ग्रंथ खरेखरा गुणनिष्पन्न नामवालो छे, अने भव्यजनोना अंतःकरणमां अमृतनी वृष्टि करीने तेने नवपल्लव बनावे तेवो छे. आ ग्रन्थना कर्त्ता श्रीमद् विनयविजयजी उपाध्याय छे, के जेओ जैन समुदायमां पर्युषण पर्वमां सर्वत्र वंचाती तेमनी करेली कल्पसूत्र उपरनी सुखबोधिका टीकाना कारणथी सुप्रसिद्ध छे. एओ साहेब श्रीसिद्धहेम शब्दानुशासन उपरथी अल्पमति जीवोना हितने माटे हेमलघुप्रक्रिया ( व्याकरण ) ना रचनारा छे, अने तेनी उपर तेमणे पोतेज ३५००० श्लोकप्रमाण टीका रचेली छे. ए उपाध्याय अपूर्व विद्वत्ता धरावनारा हता, चारे

अनुयोगमां प्रवीण हता, तेमनी द्रव्यानुयोग अने गणितानुयोगमां प्रवीणता लोकप्रकाश नामनो तेमनो करेलो ग्रंथ वतावी आपे छे. ए ग्रंथ पण २०००० श्लोक प्रमाण अनुष्टुप् वृत्तमां वनावेलो छे. आ शांतसुधारस ग्रंथमां अनित्यादिक वार अने मैत्र्यादि च्यार मली १६ भावनाना १६ प्रस्ताव छे, ते दरेक जुदी जुदी ढालमां वनावेला छे. संस्कृत भाषामां एवी ढालबंध रचना करवी, अने तेमां संधि, विभक्ति, प्रत्यय के समासादिकनो पण दोष आववा न देवो, ए तेमना संस्कृत भाषाना पूर्ण परिज्ञानने वतावी आपे छे. परंतु संस्कृत भाषामां व्याकरण वनावनारनो ए भाषा उपर एवो प्रवल कावु होवानुं संभवित ज छे.

आ ग्रंथ संवत् १७२३ मां खंभात पासे आवेला गंधार नगरमां श्री विजयप्रभ सूरिना शासनमां कर्त्ताए रचेलो छे. न्यायशास्त्रविशारद उपाध्यायजी श्री यशोविजयजी महाराजना एओ समकालीन हता, वहुधा साथे रहीने ज एमणे विद्याभ्यास करेलो छे. काशी जइने विद्याभ्यास करवामां पण एओ साथेज हता. सिद्धचक्रना माहात्म्यसूचक श्रीपाल राजानो रास वनावतां अपूर्ण स्थितिमां एओ कालधर्म पाम्या छे. ए रास पाछलथी यशोविजयजी महाराजे पूर्ण करेल छे. उपर सूचवन करायेला ग्रंथो उपरांत वीजी तेओ साहेवनी कृति होवानो संभव छे, परंतु ते अमारा जाणवामां न होवाथी अत्रे तेनो उल्लेख करी शकता नथी. ग्रंथकारे ग्रंथांते प्रशस्ति लखेली होवाथी तेमनी पट्टपरंपरा संबंधी विशेष लखवापणुं रहेतुं नथी.

आ अत्युत्तम ग्रंथ उपर एक पण टीका प्रथम थयेली नहोती, अने ग्रंथ भव्य जीवोने परम हित करे तेवो होवा

छतां सामान्य बुद्धिवालाने टीकानी अपेक्षा रहेती हती, तेथी शांतमूर्ति मुनिराज श्री वृद्धिचंदजी महाराजना शिष्य पन्यासजी श्री गंभीरविजयजी गणिए संवत् १९६७ मां आ ग्रंथ साथे प्रगट करवामां आवेली टीका रचेली छे. ते टीकानी लखेली प्रत मलवानी मुश्केली जणावाथी तेमज एक प्रत लखावतां सुमारे दश बार रुपीयानो खर्च थाय तेम होवाथी अने ते पण शुद्ध होवानुं असंभवित जणावाथी सामान्य स्थितिवाला पण अल्प किंमतमां तेनो लाभ लई शके, सहेजे मली शके अने शुद्धताने माटे निःसंदेहपणुं रहे, इत्यादि लाभनां कारणो विचारी तेने शुद्ध करी सारा कागल उपर छपावी पुस्तकाकारे प्रगट करवानो सभा तरफथी निर्णय करवामां आव्यो. आ कार्यपरत्वे संस्कृत भाषाना अभ्यासी अने गुणवान् साध्वीजी श्री लाभश्रीजी महाराजे भावनगरना श्राविका समुदायने उपदेश आप्यो, जेथी ते वर्ग तरफथी अमुक कार्य प्रसंगे एकठी करवामां आवेली रकम आ कार्यमां आपी देवानी उलट बताववामां आवी, सभाए तेनो स्वीकार कर्यो अने तेने परिणामे आ ग्रंथ टीकासहित शुद्ध सारा कागल उपर छपावीने प्रगट करवामां आव्यो छे. आ ग्रंथ उत्तम मुनिमहाराजा अनेसाध्वीवर्गने अहींना श्राविकावर्गना हितार्थे वगर मूल्ये भेट तरीके आपवानुं मुकरर करवामां आव्युं छे. पुस्तकभंडारमां पण अर्पण करवानुं ठराव्युं छे.

आ ग्रंथनी अंदर प्रुफ तपासवा विगेरेमां जे कांई दोष रही गयो होय तेने माटे विद्वानो पासे क्षमा याचना करवामां आवे छे, अने ते लखी मोकलवानी कृपा थशे तो बीजी आवृत्ति वखते सुधारी लेवानी कबुलात आपवामां आवे छे. आ ग्रंथनी शुद्धता परत्वे सभाना शास्त्री जेठालाल हरिभाईनो सारो प्रयास होवाथी तेमने माटे अत्र संतोष बताव-

वामां आवे छे. साध्वी श्री लाभश्रीजीना उपदेशथी भावनगरनो श्राविका समुदाय आवा ज्ञानवृद्धिना कार्यमां भाग लेवा लाग्यो छे, अने पोताना द्रव्यनो आवा कार्यमां सदुपयोग करवा लाग्यो छे, तेथी ए उत्तम साध्वीजीनो अहीं अंतःकरणपूर्वक आभार मानवामां आवे छे.

टीकाना कर्त्ता पन्यासजी श्री गंभीरविजयजी महाराज आ ग्रंथ पूर्ण छपाइने प्रसिद्ध थया अगाउ चालता वर्षना पोष वद ७ नी रात्रीए स्वर्गवासी थवाथी ते संबंधी अहीं खेद प्रदर्शित करवामां आवे छे. तेओ साहेब जो के आ ग्रंथ प्रसिद्ध थयेलो दृष्टिए जोवा उत्कंठित हता, छतां जोइ शक्या नथी; परतुं हवे ते ग्रंथ तेमनी धारणा अनुसार प्रगट थयो छे, एम जाणी अने भव्य सत्त्वोने तेनो लाभ लेतां देखी तेमना आत्माने शांति प्राप्त थशे, एम कल्पना करी आ टुंकी प्रस्तावना समाप्त करवामां आवे छे. परमात्मा तेमना आत्माने शांति आपो, अने तेमनो आ ग्रंथनी टीका रचवानो तेमज अमारो छपावीने प्रगट करवानो प्रशस्त प्रयास फलिभूत थाओ. तथास्तु.

जेठ शुदी १
संवत् १९६९.

श्री जैनधर्मप्रसारक सभा.
भावनगर.

---

ॐ नमः सिद्धेभ्यः ।

# ॥ अथ शान्तसुधारसः ॥

। सटीकः ।

। प्रथमः प्रकाशः ।

विदितसकलविद्या योगिनो वन्दनीया विजितसकलदोषश्रेणयो येन जाताः ।
मुनिशिवपथयाने स्यन्दनं शीघ्रयायि प्रतिदिनरसनीयं शान्तपीयूषपानम् ॥

शान्तसुधारसग्रन्थः श्रीविनयविजयवाचकवरविहितः ।
व्याख्यायते किञ्चिन्मया स्वल्पमतिभव्योपकाराय ॥

इह हि सर्वेणापि हितैषिणा संसारिजन्तुना सर्वदुःखपरिजिहीर्षया मोक्षसाधने प्रयतितव्यं । मोक्षसाधनेषु सर्वेषु मनःशान्तिरेव प्रधाना । सा चानित्यादिशुभभावनाभावितमनोभिः प्राप्यतेऽतस्तदर्थिभिरनन्तरसूचिता भावना भावनीयाः । ताश्च प्रकरणादिषु निबद्धाः सुखं भावनीयाः संपद्यन्ते । अतः पाठकवर्याः स्वपरोपकाराय षोडशभिः प्रकाशैः शान्तसुधारसाभिधानेन शास्त्रेण भावयन्ति । तत्रादौ विघ्नोपशान्तये चिकीर्षितशास्त्रपरिसमाप्तिकामनया चाशीर्मंगलमाह–

( शार्दूलविक्रीडितं वृत्तम् )

नीरन्ध्रे भवकानने परिगलत्पञ्चाश्रवाम्भोधरे नानाकर्मलतावितानगहने मोहान्धकारोद्धुरे । भ्रान्तानामिह देहिनां स्थिरकृते कारुण्यपुण्यात्मभिस्तीर्थेशैः प्रथितास्सुधारसकिरो रम्या गिरः पान्तु वः॥ १ ॥

व्याख्या–इह भवकानने भ्रान्तानां देहिनां स्थिरकृते कारुण्यपुण्यात्मभिस्तीर्थेशैः प्रथिताः सुधारसकिरो रम्या गिरो वः पान्तु इति क्रियासंटंकः । इहास्मिन् प्रत्यक्षानुभूयमानेऽनेकदुःखपूर्णे चतुर्गत्यात्मक इति यावत् । भवकानने संसारारण्ये । भ्रान्ता असुखाद्यात्मकेष्वपि भोगादिषु सुखत्वबुद्धिविपर्यासवशेन भ्रान्ता दिङ्मूढभावमाप्तत्वेन धावमानास्तेषां । देहिनां संसारोदरवर्तिप्राणिनां । स्थिरकृते शुद्धधर्मप्रापणोपायपूर्वकजन्माद्यभावसंपादनेन मोक्षस्वरूपेऽचलनिवासे स्थितिस्थापनाय । निर्देशस्य भावप्रधानत्वादेवं व्याख्या । कारुण्यपुण्यात्मभिः करुणा सर्वेषां दुःखिनां सकलदुःखेभ्यः समुद्धरणस्वभावस्तद्भावः कारुण्यं तेन पुण्यो हीनोत्तमादिषु समानोपकारस्वभावतया पवित्रो निर्मल इति यावत् आत्माऽनन्तज्ञानादिमयचेतनस्वभावो येषां तैः । तीर्थेशैः सर्वतीर्थस्वाम्यर्हद्भिः । प्रथिता याः समवसृतौ समग्रद्वादशांगीरूपेणोपदिश्य त्रिभुवने विस्तारितास्ताः । सुधारसकिरः सुधारसो जन्मादिसकलरोगसन्तापापहारित्वादमृतरसस्तस्य तुल्यः किरः प्रसरो व्याप्तयो यासां ताः । रम्या आनन्दोत्पादनेन शब्देन मधुरललितत्वेन च श्रवणमनसोः परमविनोदकारिण्यो गिरोऽर्हद्वाण्यो वो युष्मान् । अनन्तरवक्ष्यमाणतादृग्भवकानने निपतनात् । पान्तु रक्षां कुर्वन्तु । कीदृशादित्युत्तरार्धेनाह–नीरन्ध्र इति नितरां बाहुल्येनाभावं प्राप्तं रन्ध्रमन्तरालं यस्माज्जन्तूनां निर्गमहेतुमार्गस्तस्मिन् । अत्रायं

नाथः—निगोदवर्तिजीवानामेकस्मिन्नुच्छ्वासकाले सप्तदश जन्मानि भवन्त्यतो जन्मजरामरणानामन्तरालस्यालक्ष्यमाणत्वेन प्रतिसमयाजितनवकर्मबन्धाच्च नीरन्ध्रो भवः तस्मिन् । नीरन्ध्रत्वे हेतुः शास्त्रकारः स्वयमेवाह—परिगलत् आश्रवाम्भोधरे परि सर्वतः संततं सर्वदेति यावत् गलन्तो वर्षन्त एव पञ्चाश्रवाः प्राणातिपातानृतभाषणस्तेयवृत्तिमैथुनधनकुटुंबादिममत्वानि त एवाम्भोधराः पर्जन्यादयो मेघा यस्मिन् । अनेन भवकाननस्य सदा नवपल्लवता सूचिता । नानाकर्मलतावितानगहने नाना ज्ञानावरणादियात्यघातिदेशसर्वघातिजीवक्षेत्रपुद्गलविपाकादीनि कर्माणि ज्ञानादिगुणाच्छादनस्वभावानि तान्येव लता मूलोत्तरप्रकृत्यादिभेदभिन्नकर्मवृक्षाणां शाखाप्रशाखावल्लीतन्तुरूपास्तासां वितानाश्चतुर्दिग्व्यः परस्परसंमिलितप्रदेशास्तैर्गहनमुद्दिष्टपदमुक्तानावकाशाभावात्क्षुपिलं तस्मिन् । मोहान्धकारेऽस्तुरे मोहो मिथ्यात्वमोहन्यादिभेदभिन्नसमममोहनीयकर्मरूपः स एवान्धकारो ज्ञानादिदृशो व्याघातकारी तेनोद्धुरमतिनिबिडतया व्याप्तं तस्मिन् निपतनाद्दन्स्वित्यर्थः ॥ १ ॥

अथानुत्पन्नोऽपि शान्तसुधारसो येनावश्यमुत्पद्यते तं हेतुमाह—

( द्रुतविलंबितं वृत्तम् )

स्फुरति चेतसि भावनया विना न विदुषामपि शान्तसुधारसः ।
न च सुखं कृशमप्यमुना विना जगति मोहविषादविषाकुले ॥ २ ॥

व्याख्या—भावनया विना विदुषामपि चेतसि शान्तसुधारसो न स्फुरति इति संटंकः । भाव्यते भववैराग्यादिसमु-

त्पादनाय पुनः पुनर्मनसि स्मरणेनात्मा मोक्षाभिमुखीक्रियते यया सा भावनाऽनित्यादिद्वादशविधा मैत्र्यादिचतुर्विधा तया विना स्मरणाभ्यासरहितानां । विदुषामपि भूरिसिद्धान्तादिशास्त्रनैपुण्यवतामपि, तर्ह्यन्येषां किमुच्यते ? । शान्तसुधारसः यो रागद्वेषकषायविषयपरिणामाभाववान् केवलयथार्थज्ञानशुद्धश्रद्धानादिपरिणतिमयजीवपरिणामः स शान्तो भावः स एव विवेकवतामजरामरसमसमाधिविधायित्वात्सुधावत्प्रेमविनोदोत्पादकः सुधारसश्चेतसि हृदये । नेति नैव । स्फुरति जागर्ति । तया अमुना विनाऽनन्तरोक्तजागरायमाणशान्तसुधारसं विना । मोहविषादविषाकुले मोहोऽज्ञानकामक्रोधाद्यापादितबुद्धिविपर्यासो विषादो रोगशोकादिजनितोऽनेकविधसन्तापः क्लेश इति यावत् तावेव विषं धर्मसुखरूपप्राणापहारित्वात्तेनाकुलं तेन व्याकुलं निविडतया भृतं यत्तस्मिन् । जगति भुवनत्रयविभक्ते लोके । कृशमपि तुच्छादपि तुच्छं लेशमात्रमपि सुखरूपमतिभ्रमं विहायान्यदित्यर्थः । सुखमानन्दो न च नैव भवति । तस्मात्पारमार्थिकानन्ददायिश्रीशान्तसुधारसप्राप्तये वक्ष्यमाणभावनाहर्निशं प्रयत्नेन भावनीयेत्यर्थः ॥ २ ॥

अथोद्दिष्टकार्यसिद्ध्ये समुपदिशति—

यदि भवभ्रमखेदपराङ्मुखं यदि च चित्तमनन्तसुखोन्मुखम् ।
शृणुत तत्सुधियः शुभभावनामृतरसं मम शान्तसुधारसम् ॥ ३ ॥

व्याख्या—भो भोः सुधियः सूक्ष्मभावग्रहणे शोभनध्यानधारणादिषु नैपुण्यवती धीर्बुद्धिर्येषां ते सुधियस्तेषां संबोधनं । यदि संसारनैर्गुण्यदर्शनेन भवतां चित्तं मनः भवभ्रमखेदपराङ्मुखं भवेषु नारकतिर्यङ्नरामरजन्मसु यो भ्रमोऽन्या-

न्यावताररूपावर्तो जवज्रमे तृणज्रमिवत् तज्जनितो यः खेदः सन्तापस्तस्मात् पराङ्मुखं जवज्रमणपरिश्रान्तत्वेन विमुखमुद्विग्नं वर्तते इत्यर्थः । च पुनर्यदि जवन्मनोऽनन्तसुखोन्मुखं अनन्तमविनाशिस्वाधीनदुःखांशाकलंकितोत्कंठवार्जितसर्वकालस्थायित्वेनापरिमितं सुखं सहजानन्दो विद्यते यस्मिन् सोऽनन्तसुखो मोक्षस्तं प्रत्युन्मुखं सोत्कंठितं वर्तते । तदनन्तरोक्तखेदहरणाय सुखप्राप्तये शुजजावनामृतरसं शुजा निर्जराप्रापणपुण्यसंपादनस्वजावा या जावनाः पुनः पुनरनित्यतादिसंस्मरणपरिणतयस्तद्रूपो जृतः स्वांगतया धारितो रसो रमणरतिस्वादो येन स तथा तं । क्वचिदादर्शे जावनामृतरसमिति पाठः स त्वनुचितः सुगमश्च । ममेत्यस्मच्चित्ते निष्पन्नो वहिः क्रियमाणं शान्तसुधारसं पूर्वोक्तशान्तसुधारससमुत्पादनाजिधानो ग्रन्थस्तं शृणुत श्रवणक्रियाविषयीकुरुत । कृत्वा च प्रतिदिनं चेतसा विजाव्यतामित्यर्थः ॥ ३ ॥

अथ प्रथमतो जावनाकार्यं दर्शयन्नाह—

सुमनसो मनसि श्रुतपावना निदधतां द्व्यधिकादशजावनाः

यदिह रोहति मोहतिरोहिताद्भुतगतिर्विदिता समतालता ॥ ४ ॥

व्याख्या—शोजनं परद्रोहचिन्तनादिरहितं मनोऽन्तःकरणं येषां तेषां संबोधनं हे सुमनसः । द्व्यधिकादशजावना मनसि निदधतां याः द्वाभ्यामधिका द्व्यधिका दशजिः संख्येया जावना दशजावनाः द्व्यधिकाश्च ता दशजावनाश्चेति द्वादशजावनाः । मनसि चेतसि ध्यानचिन्तनविषये । निदधतां नितरां धार्यतां कंठे मनोहररत्नमालेव । कथंजूतास्ताः ? श्रुतपावनाः श्रुतं जिनागमादि यथार्थशास्त्रज्ञानं तेन पावना यथार्थवस्तुस्वरूपविचारमयोत्पन्नत्वेन पवित्राः । यद्वा

त्पादनाय पुनः पुनर्मनसि स्मरणेनात्मा मोक्षाभिमुखीक्रियते यया सा भावनाऽनित्यादिद्वादशविधा मैत्र्यादिश्चतुर्विधा तया विना स्मरणाभ्यासरहितानां। विदुषामपि भूरिसिद्धान्तादिशास्त्रनैपुण्यवतामपि, तर्ह्यन्येषां किमुच्यते ?। शान्तसुधारसः यो रागद्वेषकषायविषयपरिणामाभाववान् केवलयथार्थज्ञानशुद्धश्रद्धानादिपरिणतिमयजीवपरिणामः स शान्तो भावः स एव विवेकवतामजरामरसमसमाधिविधायित्वात्सुधावत्प्रेमविनोदोत्पादकः सुधारसश्चेतसि हृदये । नेति नैव । स्फुरति जागर्ति। तया अमुना विनाऽनन्तरोक्तजागरायमाणशान्तसुधारसं विना। मोहविषादविषाकुले मोहोऽज्ञानकामक्रोधाद्यापादितबुद्धिविपर्यासो विषादो रोगशोकादिजनितोऽनेकविधसन्तापः क्लेश इति यावत् तावेव विषं धर्मसुखरूपप्राणापहारित्वाद्धालाहलं तेन व्याकुलं निविकृतया भृतं यत्तस्मिन् । जगति भुवनत्रयविभक्ते लोके । कृशमपि

परिणामः, जीवेषु मारणताडनाक्रन्दनादि ५ पैशुन्याद्यनृतजापण ६ परस्त्रीपरधनादिहरण ७ सकलविषयसाधनधनसंरक्षण ८ चिन्तारूपैकाग्र्यानुबन्धी चतुर्विधो रौद्रपरिणामः स एव पावको जलाद्यभावशान्तिस्वभावोऽग्निस्तेन प्लुष्टं दग्धं भस्मसात्कृतमिति यावत् भावुकं मंगलभावनायुक्तमीदृशं विवेकस्य सदसत्स्वपरहेयोपादेयवस्तुविभिन्नताकारिज्ञानस्य यत्सौख्यं चातुर्यं सौन्दर्यं च यत्र तस्मिन्नीदृशे तेषां मानसे हृदयस्थले । समाङ्कुरः समः सर्वत्र निर्विकारसदृशपरिणामस्तस्याङ्कुरः प्रथमैकांशोत्पत्तिः सोऽपि क्व प्ररोहतितमां अतिशयप्रयत्नेनापि न प्ररोहतीत्यर्थः । ततः का पुष्पफलाद्याशा । अनन्तरश्लोकद्वयेऽयमाशयः—शुभभावनाभावितजनमानसे शान्तसुधारससंभवोऽस्ति विषयखंपटार्तरौद्रपरिणामपरिणते नास्तीति तदर्थिभिः शुभभावना भावयितव्या इत्यर्थः ॥ ५ ॥

अथ शुभभावनापि यस्मिन् सुसंभवास्ति तमाह—

( वसन्ततिलकावृत्तम् )

यस्याशयं श्रुतकृतातिशयं विवेकपीयूषवर्षरमणीयरमं श्रयन्ते ।
सद्भावनासुरलता न हि तस्य दूरे लोकोत्तरप्रशमसौख्यफलप्रसूतिः ॥ ६ ॥

व्याख्या—यस्य भाग्यशालिनो भव्यस्य । श्रुतकृतातिशयं श्रुतेन जिनागमाध्ययनश्रवणचिन्तनश्रद्धानरूपाभ्यासेन कृत उत्पादितोऽतिशयोऽतिसूक्ष्मभावावगमकारिबोधनैपुण्याधिक्यं यस्य तं । सद्भावनासुरलताः सत्यः स्वपरहितस्वभावत्वेन समीचीना भावनाः शुभविचारमयचित्तवृत्तयस्ता एव सुरलताः कल्पवल्लयस्ताः । यदा विवेकपीयूषवर्षरमणीयरमं

यस्यायथार्थग्राहिश्रुतज्ञानं भवति तस्यापि भाविताः सन्तो यथार्थग्राहि श्रुतं कुर्वन्ति वर्धयन्तीति श्रुतपावनाः । यद्वा शास्त्रनिबद्धाः साधुभिरुपदिश्यमानाः श्रुताः सन्तो रागादिमलिनं श्रोतृहृदयं श्रवणमात्रेण पवित्रयन्तीति श्रुतपावनाः । एवंभावनाः कुतो भवन्तीत्यत आह—यद्यस्मात् इह भावनाभावितजनहृदये । मोहतिरोहिताद्भुतगतिः मोहेन मिथ्यात्वमोहनीयादिना तिरोहिता समाच्छादिताऽद्भुता चमत्कृतिकारिणी केवलज्ञानाद्युत्पादिका गतिः शक्तिर्यस्याः सा तथा । विदिता जिनागमे योगिजने च सुप्रसिद्धा प्रकटप्रभावा न तु नामश्रवणमात्रा । समतालता समता सर्वत्र प्राणिगणे द्रव्यक्षेत्रादिपदार्थे रागद्वेषममत्वाभावेन तुल्यपरिणतिरूपा सैव लता सर्वेष्टसाधिका सुरतरुशाखा । रोहति शुभभावनाभाविते हृदये सरसभूप्रदेशे कल्पद्रोरंकुरवत्समुत्पद्यते । ततोऽसंशयं सर्वप्रभावसिद्धिरतो मनसि भावनाऽवश्यमेव भाव्येत्यर्थः ॥४॥

अथ समतोत्पादविरोधिमनोवृत्तिपरिहारायोपदिशति—

(रथोद्धतावृत्तम्)

आर्तरौद्रपरिणामपावकप्लुष्टभावुकविवेकसौष्ठवे ।
मानसे विषयलोलुपात्मनां क्व प्ररोहतितमां समांकुरः ॥ ५ ॥

व्याख्या—विषयलोलुपात्मनां विषयाः शब्दरूपगन्धरसस्पर्शास्तेषां विलासेषु लोलुपोऽतिगाढतरलंपट आत्मा मनोद्वारा जीवो येषां तेषां । आर्तरौद्रपरिणामपावकप्लुष्टभावुकविवेकसौष्ठवे मानसे आर्तं च रौद्रं च आर्तरौद्रे तयोर्यः स्वपरपीडाकर इष्टनाशा १ ऽनिष्टसंयोग २ रोगप्रतिकाराकुल ३ निदानकरण ४ चिन्तारूपैकाग्र्यानुबन्धी चतुर्विध आर्त-

परिणामः, जीवेषु मारणताडनाक्रन्दनादि ५ पैशुन्याद्यनृतभाषण ६ परस्त्रीपरधनादिहरण ७ सकलविषयसाधनधनसंरक्षण ८ चिन्तारूपैकाग्र्यानुबन्धी चतुर्विधो रौद्रपरिणामः स एव पावको जलाद्यभावशान्तिस्वभावोऽग्निस्तेन प्लुष्टं दग्धं भस्मरूपकृतमिति यावत् भावुकं मंगलभावनायुक्तमीदृशं विवेकस्य सदसत्स्वपरहेयोपादेयवस्तुविभिन्नताकारिज्ञानस्य यत्सौष्ठवं चातुर्यं सौन्दर्यं च यत्र तस्मिन्नीदृशे तेषां मानसे हृदयस्थले। समाङ्कुरः समः सर्वत्र निर्विकारसदृशपरिणामस्तस्याङ्कुरः प्रथमैकांशोत्पत्तिः सोऽपि क्व प्ररोहतितमां अतिशयप्रयत्नेनापि न प्ररोहतीत्यर्थः। ततः का पुष्पफलाद्याशा। अनन्तरश्लोकद्वयेऽयमाशयः—शुभभावनाभावितजनमानसे शान्तसुधारससंभवोऽस्ति विषयलंपटार्तरौद्रपरिणामपरिप्लुते नास्तीति तदर्थिभिः शुभभावना भावयितव्या इत्यर्थः ॥ ५ ॥

अथ शुभभावनापि यस्मिन् सुसंभवास्ति तमाह—

( वसन्ततिलकावृत्तम् )

यस्याशयं श्रुतकृतातिशयं विवेकपीयूषवर्षरमणीयरमं श्रयन्ते।
सद्भावनासुरलता न हि तस्य दूरे लोकोत्तरप्रशमसौख्यफलप्रसूतिः ॥ ६ ॥

व्याख्या—यस्य भाग्यशालिनो भव्यस्य। श्रुतकृतातिशयं श्रुतेन जिनागमाध्ययनश्रवणचिन्तनश्रद्धानरूपाभ्यासेन कृत उत्पादितोऽतिशयोऽतिसूक्ष्मभावावगमकारिबोधनैपुण्याधिक्यं यस्य तं। सद्भावनासुरलताः सत्यः स्वपरहितस्वभावत्वेन समीचीना भावनाः शुभविचारमयचित्तवृत्तयस्ता एव सुरलताः कल्पवल्लयस्ताः। यदा विवेकपीयूषवर्षरमणीयरमं

विवेकः स्वपरसदसद्धेयोपादेयादिवस्तुस्वरूपभिन्नताकारिज्ञानं तद्रूपं यत्पीयूषममृतं तस्य यो वर्षो वृष्टिः श्रुतकृतातिशयप्राप्तस्तेन पीयूषवर्षशीतलतया रमणीयोऽस्माकं क्रीडनयोग्योऽस्तीति मत्वा यत्नेनैव समुद्धृत्य रमः प्रियवल्लभः पतिस्तं रमं। श्रयन्ते सुरपादपवदेष्टयन्ति। तस्य प्रोक्तविशेषणविशिष्टभावतो भव्यस्य लोकोत्तरप्रशमसौख्यफलप्रसूतिर्दूरे न हि लोके नरसुरनिवासेऽप्युत्तरमनन्यसदृशत्वेन प्रधानं प्रकर्षेण शमः शान्तिक्षमावैराग्यकारुण्यपरिणामप्राप्तिः प्रशमस्तेन जनितं यत्सुखस्य भावः सौख्यं सहजानन्दविलासिता तदेव फलं शुभभावनासुरलताभ्यो लभ्यं तस्य प्रसूतिः समुद्भवः सा दूरे प्रभूतभवभ्रमणरूपप्रचुरकालान्तरे भाविनी न हि स्यात्; किं तु स्वल्पतरभवैर्भाविन्येव संभाव्यते। इतरथा भावनाभिरारायस्य संवेष्टनं न संभवतीत्यर्थः ॥ ६ ॥

एवं कृतप्रस्तावना वाचकेन्द्रा अधिकृतभावनाः समुद्देष्टुकामा इदमाह—

(अनुष्टुब् वृत्तम्)

अनित्यत्वाशरणते भवमेकत्वमन्यताम्। अशौचमाश्रवं चात्मन् संवरं परिभावय ॥ ७ ॥

कर्मणो निर्जरां धर्मसूक्ततां लोकपद्धतिम्। बोधिदुर्लभतामेता भावयन्मुच्यसे भवात् ॥ ८ ॥

व्याख्या—हे आत्मन् त्वमेता अनन्तरवक्ष्यमाणस्वरूपा द्वादश भावना भावयंन्निरन्तरमात्मानं वासयन् भावनापरिणामपरिणतं कुर्वन् तिष्ठसे इति यावत्। तदा त्वं शीघ्रं भवाच्चतुर्गतिपरिभ्रमणदुःखात् मुच्यसे सर्वद्रव्यभावबन्धनरहितपरमपदनिवासी भवसीति द्वितीयश्लोकेन संबन्धः। ताः का इत्याह—अनित्यत्वाशरणते अनित्यत्वं चाशरणता

घानित्यत्वाशरणते नित्यं सदास्थायित्वं यस्य नास्ति स सर्वोऽपि पदार्थसार्थोऽनित्योऽवलोकनीयः तद्भावस्तत्त्वं, सर्वानपि संयोगाननित्यत्वेन भावयन्निति प्रथमा १। शरणं संकटापहारिस्वास्थ्यकारि, न शरणमशरणं, सर्वोऽपि पौद्गलिकपदार्थस्तथाऽवलोकयन् तद्भावस्तत्तेति द्वितीया २। भवं भवंत्यस्मिन्नघटनीयत्वेन जीवा इति भवस्तद्भावं चिन्तयन् ३। एकत्वमात्मा सर्वत्रैकोऽसहायश्च ४। अन्यत्वमात्मनो देहादिभ्योऽन्यत्वमवधारयन् ५। अशौचं शरीरस्याशुचिप्रभवादि भावयन् ६। आश्रवं मिथ्यात्वादीनां नवकर्मबन्धहेतुत्वं भावयन् ७। संवरं समितिगुप्त्यादीनां नवकर्मबन्धस्य विरोधित्वं भावयन् ८। कर्मणो निर्जरां कर्मणः पूर्वबद्धस्य द्वादशविधेन तपसा निर्जरां देशतो हानिं भावयन् ९। धर्मसूक्ततां धर्मस्य रत्नत्रयरूपमोक्षमार्गस्य सकलवस्तुस्वरूपस्य सुष्ठु सर्वविरोधपरिहारवत्युक्तिरुपदेशित्वं तद्भावस्तत्ता तां अर्हतां तद्दृशा अन्ये तदुपदेशका न भूता न सन्ति न भविष्यन्तीत्येवं भावयन् १०। लोकपद्धतिं चतुर्दशरज्ज्वात्मकस्य लोकस्य सर्वाकारपंक्तिष्वात्मनो जन्मस्थितिमरणानि भावयन् ११। बोधिदुर्लभतां अनादितो जीवस्य सूक्ष्मेतरैकेन्द्रियादिष्वतिप्रभूतकालनिर्गमात् सम्यक्त्वादिधर्मसामग्री दुष्प्राप्या तद्भावस्तत्ता तां भावयन् १२ भवान्मुच्यस इत्यर्थः ॥ ७–८ ॥

अथ यथोद्देशस्तथा निर्देश इतिन्यायात्प्रथममनित्यभावनां निर्दिशति। तत्रापि तावच्छरीरानित्यतां भावयन्नाह—

( पुष्पिताग्रावृत्तम् )

वपुरवपुरिदं विदभ्रलीलापरिचितमप्यतिभंगुरं नराणाम्।
तदतिभिदुरयौवनाविनीतं भवति कथं विदुषां महोदयाय ॥ ९ ॥

व्याख्या—वेत्तीति वित् पंडितस्तत्संबोधनं हे वित् विद्वन् आत्मन्। इदं प्रत्यक्षं दृश्यमानं। अभ्रलीलापरिचितं अपः सलिलं बिभर्ति धारयतीत्यभ्रं मेघस्तस्य या लीला वायुतरंगैः क्षणदृष्टनष्टता तया परिचितमतिशयेन व्याप्तं सदृशस्वभावमिति यावत्। यद्वा, भिन्नमेतत्पदं तदा परिचितं यदाहारवस्त्रालंकारैर्नित्यं पर्यतिशयेन त्वया पूजितं सेवितं तत्। वपुः शरीरं। अथपुरेव पुञ्जीभूतविनश्वरपरमाणुराशिरशरीरमेव जानीहि। यद्वाऽवपुः सर्वानादरपरिभवनीयतादिनिवासनगरीं ज्ञात्वा तनुमोहपरिहरः ईदृशमपि नराणां मनुष्याणां अतिभंगुरं स्वयं विनश्वरशीलं वर्तते। तदतिभिदुरयौवनाविनीतं तदनन्तरोक्तस्वरूपं शरीरमतिभिदुरोऽतिक्रान्तो भिदुरो वज्रो येन वज्रादपि दुर्भेद्यकामविकारभृतेन यौवनेन तारुण्येनाविनीतमुद्धतं वर्तते। तद्विदुषां पंडितानां महोदयाय मोक्षादिकल्याणाय कथं केन प्रकारेण भवति। न कथञ्चिदपि। अतः शरीरमोहं विहाय तपःसंयमादिषु नियोजय येन महोदयाय स्यादित्यर्थः॥ ९ ॥

अथ सांसारिकाः सर्वे पदार्था अनित्या एवेति दर्शयन्नाह—

(शार्दूलविक्रीडितं वृत्तद्वयम्)

**आयुर्वायुतरत्तरंगतरलं लग्नापदः संपदः सर्वेऽपीन्द्रियगोचराश्च चटुलाः सन्ध्याभ्ररागादिवत्।**
**मित्रस्त्रीस्वजनादिसंगमसुखं स्वप्नेन्द्रजालोपमं तत्किं वस्तु भवे भवेदिह मुदामालंबनं यत्सताम्॥ १० ॥**

व्याख्या—भो भव्या भवद्भिर्नेत्राणि संमील्य हृदये सम्यगालोच्यतां, आलोच्य कथ्यतां। इहास्मिन् प्रत्यक्षदृश्यमाने सचराचरे भवे संसारे। तत्तेषु प्रत्यक्षपरोक्षेषु सर्वेषु किमिति किंनामकं वस्तु पदार्थो भवेद्भविष्यति। यद्वस्तु सतां प्रधा-

नपुरुषाणां आनन्दाय शाश्वतसुखाय आलंबनमाश्रयणीयं स्यात् । तत्तु रत्नत्रयं विहाय भवेऽन्यन्न पश्यामः । कुत एवं? यतो भवे आयुर्वायुतरत्तरंगतरलं आयुः सकलसाधनाधारभूतं प्राणिनां जीवितं तत् वायुतरत्तरंगतरलं वायुरनिलस्तस्य ये तरत्तरंगा अस्थिरस्वभावाः कल्लोलास्तेभ्योऽपि तरलं चञ्चलतरं वर्ततेऽतो नानन्दालंबनं । संपदः स्थावरजंगमसर्वविभूतयो लग्नाः संततसंबद्धाः सर्वांगेन व्याप्ता आपदो विपत्तयो यासां तास्तथाविधाः कथमानन्दालंबनं । सर्वेऽपीन्द्रियगोचराश्च सन्ध्याभ्ररागादिवच्चटुलाः सर्वेऽपि समस्ता अपि न तु कियन्त एव इन्द्रियगोचराः स्पर्शनादीन्द्रियाणां रमणस्थलभूताः स्पर्शादिपञ्चविषयाश्च सन्ध्याभ्ररागादिवत् सन्ध्या प्रातःकालसायंकालसंबन्धिनी द्वे तयोरवसरे जाताः पञ्चवर्णमनोहरा येऽभ्रा वार्दलास्ते यथा क्षणरमणीया दृष्टनष्टा भवन्ति तद्वदेतेऽपि । आदिपदादिन्द्रजालस्वप्नसंपन्मृगतृष्णाविद्युदादिवच्चटुलाश्चञ्चला बोध्याः, अतो नानन्दालंबनं । मित्रस्त्रीस्वजनादिसंगमसुखं स्वप्नेन्द्रजालोपमं मित्राणि सखायः, स्त्रियः प्रमदाः, स्वजना जननीजनकभ्रातृभगिन्यादयः, तेषां यः संगमः संयोगस्तेन यत्सुखं विनोदधीः तदपि स्वप्नेन्द्रजालदृष्टवस्तुवदसत् जीवे संयोगस्याविद्यमानत्वान्नानन्दालंबनमित्यर्थः ॥ १० ॥

प्रातर्भ्रातरिहावदातरुचयो ये चेतनाचेतना दृष्टा विश्वमनःप्रमोदविधुरा भावाः स्वतः सुन्दराः
तांस्तत्रैव दिने विपाकविरसान्हा नश्यतः पश्यतश्चेतः प्रेतहतं जहाति न भवप्रेमानुबन्धं मम ॥ ११ ॥

व्याख्या—हे भ्रातर्हे बन्धो चेतन । इह मनुष्यलोके । ये चेतनाचेतना भावा विश्वमनःप्रमोदविधुराः स्वतः सुन्दराः प्रातरवदातरुचयो दृष्टा इति संबन्धः येऽतिप्रभूतत्वेन नामग्राहं वक्तुमशक्याः चेतनाश्च स्त्रीपुरुषहस्त्यश्ववृक्षाद-

योऽपेतनाश्च सदनस्यन्दनवस्त्रालंकारादयः विश्वमनःप्रमोदविधुरा विश्वस्य जगज्जनस्य यन्मनो हृदयं तस्य यः प्रमोदो हर्षप्रकर्षस्तज्जनने विधुरा व्यापृता जननयनमनोऽभिवेष्टितत्वादतिरमणीयत्वेन भावाः सौम्यतेजःकान्तिदीप्तपदार्थाः स्वतोऽनलंकृतस्वरूपाकारमात्रतः सुन्दराः सुशोभितमनोहराः उक्तविशेषणसमग्राः प्रातरवदातरुचयः प्रातर्दिवसस्य पूर्वार्धे अवदाताः सुविशुद्धा धवलपीतवर्णा रुचयः कान्तिप्रकाशा दृष्टा अवलोकिताः । तान् विपाकविरसान् तत्रैव दिने नश्यतः पश्यतो हा प्रेतहतं मम चेतः भवप्रेमानुबन्धं न जहातिताननन्तरोक्तपदार्थान् विपाकश्चेतनानां कर्मोदयेनेतरेषां स्वस्थितिपरिपाकेनान्यरूपप्रापणं तेन विरसान् विनष्टप्रेमोत्पादकमाधुर्यस्वभावान् तत्रैव दिने यस्मिन् दिने रमणीया दृष्टास्तस्मिन्नेव पश्चिमार्धे नश्यतो विनाशं गच्छतः पश्यतो विलोकयतोऽपि । हा महाखेदकरं । प्रेतो नरकस्तत्प्रायोग्यक्लिष्टकर्मोदयः पिशाचश्च तेन हतं नष्टविशिष्टविवेकं ईदृग् मम चेतो ममात्मा मन्मानसं वा । भवप्रेमानुबन्धं भवसुखे प्रेमानुबन्धो भवप्रेमानुबन्धो विषयरागाखंडधारावत्त्वं । न जहाति न त्यजति । किं कुर्मोऽनित्यानपि शाश्वतान्मन्यत इत्यर्थः ॥ ११ ॥

अथ विषयमोहमूढं मानसं संबोधयन् गेयपद्याष्टकेनानित्यभावनां स्वयं भावयति—

मूढ मुह्यसि मुधा मूढ मुह्यसि मुधा विभवमनुचिन्त्य हृदि सपरिवारम् ।
कुशशिरसि नीरमिव गलदनिलकंपितं विनय जानीहि जीवितमसारं, मूढ० ॥ १-१२ ॥

व्याख्या–मूढ हे अज्ञ आत्मन् त्वं सपरिवारं सह परिवारेण पुत्रवनितादिपरिजनेन सहितं विभवं धनसंपदादिपदार्थं

हृदि मनसि मदीयमेतदिति अनुचिन्त्य सदैव रागवशास्त्वकीयं परिकल्पयन् मुधा व्यर्थमेव हितफलप्राप्त्यभावेऽपि मुह्यसि मोहाज्ञानवशादेव तत्रासक्तिं यासि न तत्त्वदीयं, सर्वथाऽन्यत्वादित्यर्थः । दूरेऽस्तु परिजनविभवादिकं त्वज्जीवितमप्यसारं वर्तते तच्चिन्तयेत्याह—विनय गलदनिलकंपितं कुशशिरसि नीरमिव जीवितमसारं जानीहि विनयनं विनिवर्तनं मोक्षाभिलापो विनयस्तत्संबोधनं हे विनय । अनिलकंपितं अनिलो वायुस्तेन कंपितं धूनितमान्दोलितमिति यावत् गलत्पतदेव कुशशिरसि कुशानि दर्भाणि तृणानि च तेषां शिरः शिखाग्रभागस्तत्र स्थितं यत् नीरं जलकणस्तदिव तेन सदृशं जीवितं सकलकार्याधारभूतमायुरसारं सारो दार्ढ्यं न सारमसारमदृढं रोगादिप्रवाहैः स्वभावतोपि कालभाजनवरक्षणभंगुरं जानीहि, ज्ञात्वा शीघ्रं निजात्महितमनेन साधयेत्यर्थः ॥ १–१२ ॥

पश्य भंगुरमिदं विषयसुखसौहृदं, पश्यतामेव नश्यति सहासं ।
एतदनुहरति संसाररूपं रयाज्ज्वलज्जलदबालिकारुचिविलासम्, मू० ॥ १–१३ ॥

व्याख्या—हे चेतन इदं प्रत्यक्षमनुभूयमानं । भंगुरं स्वतो विनश्वरशीलं । विषयसुखसौहृदं विषयेभ्यो यत्सुखमानन्दस्तस्य यत्सौहृदं सुहृद्बन्धुर्मित्रं च तद्भावः सौहृदं बन्धुतां मैत्रीं च । पश्य हृदयदृष्ट्या सम्यग्विलोकय । सहासं हसनं हासो हासेन सहितं यद्भवत्तावदिदानीं तत्सहासं पश्यतां बन्धुमित्राणां विलोकयतां अवगणनां कुर्वत् नश्यति सुतरामदृश्यो भवतीत्यत एतत्प्रत्यक्षं वर्तमानं संसाररूपं भवे सर्वाकारं । रयाज्ज्वलज्जलदबालिकारुचिविलासमनुहरति रयादतिवेगवत्त्वेन ज्वलन्ती सप्रकाशा सती या जलदबालिका जलदो मेघस्तस्य बालिकेव बालिका तत्र जातत्वात्तत्पुत्री विद्युत्तस्या

या रुचिः कान्तिस्तस्या यो विलासोऽतिशीघ्रदृष्टनष्टत्वं तमनुहरति तेन सदृशतां करोति । तत्र तव कोऽयं प्रतिबन्धोऽनुचित एवेत्यर्थः ॥ २–१३ ॥

हन्त हतयौवनं पुच्छमिव शौवनं, कुटिलमति, तदपि लघुदृष्टनष्टम् ।
तेन बत परवशा परवशा हतधियः, कटुकमिह किं न कलयन्ति कष्टम्, मू० ॥ ३–१४ ॥

व्याख्या—हन्तेति कोमलामन्त्रणे हे मन्दबुद्धिचेतन हतयौवनं सुखनिराशास्थानतपोरहितत्वेन दुर्बुद्धिविनाशितं ईदृशं यद्यौवनं तारुण्यं तत् । शौवनं पुच्छमिव अतिकुटिलं शुन इदं शौवनं पुच्छमिव तल्लांगूलवदतिकुटिलं वक्राकारं वर्तते । तदपि तथाविधमपि लघुदृष्टनष्टं लघु शीघ्रमेव दृष्टं सन्नष्टं नश्वरशीलं तत्तथा वर्तते । बत खेदेऽहो विवेकिचित्त दुःखदं घृणं यत्तेनोक्तलक्षणेन यौवनेन परवशाः पराधीना जनाः परवशाः परेषामितरजनानां वशाः वशवर्तिनः यद्वा परेषां पुरुषाणां वशाः स्त्रियस्ताभिर्हतधियः इति एकं पदं । हतधियो हता विनष्टा पापोदयवती पापकारिणी धीर्बुद्धिर्येषां ते हतधियः । इह किं कटुकं कष्टं न कलयन्ति इह वर्तमानजन्मन्यपि किमिति किंनामकं तत्कटुकमतिशयेनासह्यं कष्टं कृच्छ्रजीवनकारिणीं पीडां न कलयन्ति न प्राप्नुवन्ति सर्वानिष्टं प्राप्नुवन्तीति ज्ञात्वाऽनित्ये यौवनेऽपि धर्मोद्यमो विधेय इत्यर्थः ॥ ३–१४ ॥

यदपि पिण्याकतामंगमिदमुपगतं, भुवनदुर्जयजरापीतसारम् ।
तदपि गतलज्जमुज्झति मनो नांगिनां, वितथमति कुथितमन्मथविकारम् ॥ ४–१५ ॥

व्याख्या—अहो मनोदुष्टतां कियद्ब्रूमः । यदपि यदापि भुवनदुर्जयजरापीतसारमिदमंगं पिण्याकतामुपगतं भुवने त्रिजगति या दुःखेन जेया भुवनदुर्जया निवारयितुमशक्या जरा वयोहानिस्तया पीतो भक्षितः सारः सामर्थ्यं यस्य तत्तथाभूतं इदं प्रत्यक्षं अंगं शरीरं पिण्याको यंत्रपीडिततिलानां कल्कः 'खल' इति लोके तत्तां उपगतं प्राप्तं । तदपि तदापि वितथमति गतलज्जमंगिनां मनो कुथितमन्मथविकारं नोज्झति वितथाऽन्यथास्थिते पदार्थेऽन्यथाग्राहिणी विपर्यस्ता मतिः परिणतिर्यस्य तत्तथाभूतं गताऽपनष्टा लज्जाऽनुचिताकृत्यप्रवृत्तिभ्यो निवृत्तिहेतुपरिणतिर्यस्मात्तत्तथाभूतं अंगिनां देहधारिजीवानां मनो हृदयं कुथितमन्मथविकारं कुथितो जराप्राप्तत्वेन दुर्गन्धविरस ईदृशो मन्मथः कामस्तस्य विकारो दुष्टपरिणामस्तं । नेति नैव उज्झति परित्यजति शरीरशक्त्यभावेऽपि कामिजनमरणान्तपर्यन्तमनोविकारेण दह्यमाना दुःखिनो भवन्तीत्यर्थः ॥ ४–१५ ॥

सुखमनुत्तरसुरावधि यदतिमेदुरं, कालतस्तदपि कलयति विरामम् ।
कतरदितरत्तदा वस्तु सांसारिकं, स्थिरतरं भवति चिन्तय निकामम्, मू० ॥ ५–१६ ॥

व्याख्या—हे चेतन निकामं भृशमेकाग्रमनसा चिन्तय विचारय । संसारे सर्वोत्कृष्टं अतिमेदुरं स्वरूपपुष्टव्याघातवर्जितरोगशोकनिद्रारहितसमग्रताधनसामग्रीसदासमन्वितप्रभूतकालस्थायितयाऽत्यानन्दघनं अनुत्तरसुरावधि अनुत्तरं सांसारिके श्रेष्ठं सुरविमानं सर्वार्थसिद्धिनामकमवधीकृत्य भवनपतिपर्यन्तं देवानां सुखं शर्म । तदपि कालतो देवायुःस्थितिपर्यन्तप्राप्तेः विराममवसानं कलयति प्राप्नोति । तदा सांसारिकं संसारे समुद्भवं नरादिजन्मस्त्रीपुत्रधनादिकं इतरत्

देवेन्यो देवसुखेन्यो व्यतिरिक्तं कतरत् कियत्तरं किंनामकं वस्तु पदार्थः स्थिरतरं देववस्तुन्योऽधिकतरकालस्थायि नवति तत्र किंचिदन्नीत्यर्थः ॥ ए–१६ ॥

येः समं क्रीडिताश्ये च भृशमीक्षिता, यैः सहाकृष्महि प्रीतिवादम् ।
तान् जनान् वीक्ष्य यत नसमनूयं गतान्निर्विशंकाः स्म इति धिक् प्रमादम्, मू० ॥ ६–१७ ॥

व्याख्या–यतेति खेदे किं वयं विज्ञाः स्मः न किंचित् । कुत एवं ? यतो वयं यैः सुहृद्बन्धुवनितादिन्निः समं सार्धं क्रीडिता जलाशयवनजुवनशय्यादिषु सविलासं सपरिहासं खेलिताः । च पुनर्ये जननीजनकपुत्रादयः नृशमीक्षिताः नृशमतिशयेन नोजनाच्छादनालंकारस्तुतिन्निरीक्षिताः पूजिताः । यैर्वनितासुतविद्भिः सह साकं प्रीतिवादं विनोदवार्तां अकृष्महि अकुर्म तानुक्तविशेषणविशिष्टान् जनान् जीवान् नसमनूयं गतान् रक्षापुञ्जत्वप्राप्तान् वीक्ष्य दृष्ट्वापि निर्विशंकाः स्मः नितरामतिशयेन विगता निर्गता शंका मरणनयं येषां ते निर्विशंका अजरामरवन्निश्चिन्ताः स्म इति यावत् । इति मोक्षप्रकारेण स्थितेऽपि स्वहितोद्यमरहिता अतो रागादिप्रमादं धिगस्तु इत्यर्थः ॥ ६–१७ ॥

असकृदुन्मिष्य निमिषन्ति सिन्धूर्मिवच्चेतनाचेतनाः सर्वनावाः ।
इन्द्रजालोपमाः स्वजनधनसंगमास्तेषु रज्यन्ति मूढस्वनावाः, मू० ॥ ७–१८ ॥

व्याख्या—हे आत्मन् असिंल्लोकोदरे चेतनाचेतनाः सर्वनावाः सिन्धूर्मिवदसकृदुन्मिष्य निमिषन्ति चेतना एके-

न्द्रियादिपञ्चेन्द्रियपर्यन्तजीवानां सूक्ष्मबादरप्रजीवशरीरज्ञापामनःसमुल्लासादयः, अचेतना निर्जीवगृहासनरथशिबिकायानजनपात्राजरणधनादयः, द्वन्द्वे कृते ते तथाभूताः सर्वभावाः समग्रपदार्थाः सिन्धूर्मिवत् सिन्धुः समुद्रस्तस्य ये ऊर्मयः कल्लोलप्रकारा यथा निरन्तरमुत्पद्यन्ते विलीयन्ते तद्वत् चेतनाचेतनसर्वभावा असकृत् एकस्मिन्मुहूर्तयामदिनाहोरात्रपक्षयुगादिकेऽनेकशः उन्मिष्य समुत्पद्य समुत्पद्य निमिषन्ति विलीयन्ते विनश्य न जानीमः क्व यान्तीत्यर्थः । तर्हि य इन्द्रजालोपमाः स्वजनधनसंगमाः दृष्टनष्टत्वेनेन्द्रजालसदृशाः सन्ति ततस्तेषु ये रज्यन्ति प्रसक्ता भवन्ति ते मूढस्वभावा अज्ञातज्ञेया एव सन्तीत्यर्थः ॥ ७–१८ ॥

कवलयन्नविरतं जंगमाजंगमं, जगदहो नैव तृप्यति कृतान्तः ।

मुखगतान् खादतस्तस्य करतलगतैर्न कथमुपलप्स्यतेऽस्माभिरन्तः, मू० ॥ ७–१९ ॥

व्याख्या—अहो महाश्चर्यं यदयं कृतान्तः कृतो विहितोऽन्तो जीवानां प्राणविनाशो येन स कृतान्तो मरणं सः अनादित आरभ्य अविरतं जंगमाजंगमं जगत् कवलयन् नैव तृप्यति अविरतं समयाद्यन्तराभावेन निरन्तरं जंगमं द्वीन्द्रियादिरूपत्रसजीवगणं अजंगमं पृथिव्यादिस्थावरं तद्रूपं यज्जगज्जीवराशिः तत् कवलयन् भक्षयन्नपि नैव तृप्यति नैव संतुष्यति । तस्य मुखगतान् खादतः करतलगतैरस्माभिः कथमन्तो नोपलप्स्यते तस्य मरणस्य किं कुर्वतः ? मुखगतान् खादतः ये मुखे दंष्ट्रामध्य आगताः प्राप्ताः प्राणिनस्तान् खादतश्चर्वयतस्तस्य करतलगतैः हस्ततले कवलरूपतां प्राप्तैःअस्माभिरतिमत्सरैः कथं केनोपायेन अन्तो विनाशो न लप्स्यते ? नास्त्येव भवे स उपायस्तस्माल्लप्स्याम एवेत्यर्थः ॥ ७–१९ ॥

अथानित्यभावनामुपसंहरन्नाह—

नित्यमेकं चिदानन्दमयमात्मनो, रूपमभिरूप्य सुखमनुभवेयम् ।
प्रशमरसनवसुधापानविनयोत्सवो, भवतु सततं सतामिह भवेऽयम्, मू० ॥ ए–२० ॥

॥ इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचिते शान्तसुधारस-
गेयकाव्येऽनित्यभावनाविभावनो नाम प्रथमः प्रकाशः ॥

व्याख्या—हे विनय चिदानन्दमयमात्मनो रूपमभिरूप्य नित्यमेकं सुखमनुभवेयं चिदानन्दमयं ज्ञानानन्देन पूर्णं आत्मनो रूपं निजचेतनस्वरूपं अभिरूप्य चेतसा सम्यग् हृदये निधाय नित्यं निरन्तरं शाश्वतं एकं दुःखांशेनाकलंकितं निष्केवलं न तु सांसारिकवद्दुःखेन मिश्रितमिति यावत् । ईदृक् सुखं परमानन्दं अनुभवेयं स्वानुभवप्रत्यक्षं कुर्याम् । तथा वाचकवरः सज्जनानभिनन्दयति इह भवे सतामयं प्रशमरसनवसुधापानविनयोत्सवः सततं भवतु एतच्छास्त्राध्ययनश्रवणमननात् इह जिनशासने भवे संसारे शेषेऽवशिष्यमाणे सति सतां साधुपुरुषाणां अयमुक्तवक्ष्यमाणस्वरूपः प्रशमरसनवसुधापानविनयोत्सवः प्रशमरसः शान्तस्वभावे रतिः स एव नवमपूर्वं सुधापानं तस्मिन् विनयोऽनुनयः प्रार्थना तद्रूप उत्सवो मंगलं सततं निरन्तरं भवत्वित्यर्थः ॥ ए–२० ॥

इति श्रीतपागच्छीयसंविग्नशाखीयपरममुनिश्रीवृद्धिविजयमुख्यशिष्यश्रीमुक्तिविजयगणिसतीर्थ्यतिलकमुनिश्रीवृद्धिविजयचरणयुगसेविना पंडितगंभीरविजयगणिना विरचितायां शान्तसुधारसटीकायामनित्यभावनाविभावनो नाम प्रथमः प्रकाशः समजनि ॥

# ॥ द्वितीयः प्रकाशः ॥

प्रथमप्रकाशेऽनित्यभावना विभाविता । अनित्याश्च पदार्थाः शरणदा न भवन्तीत्यनेन संबन्धेनायातामशरणभावनां विभावयन्नाह । तस्याश्चायमादिमः श्लोकः—

(शार्दूलविक्रीडितम् )

ये षट्खंडमहीमहीनतरसा निर्जित्य बभ्राजिरे, ये च स्वर्गभुजो भुजोर्जितमदा, मेदुर्मुदा मेदुराः।
तेऽपि क्रूरकृतान्तवक्त्ररदनैर्निर्दह्यमाना हठादत्राणाः शरणाय हा दश दिशः प्रैक्षन्त दीनाननाः ॥ १ ॥

व्याख्या—हे चेतन मरणे समागते सति तव कः शरणं भविष्यतीति हृदये निभालय । कृतान्ताग्रे बलिनोऽपि शृगालकल्पाः । यतो ये भुजादिबलोद्धताश्चक्रवर्तिनः अहीनतरसा षट्खंडमहीं निर्जित्य बभ्राजिरे अहीनतरसा न हीनमहीनं मनुष्यजात्यपेक्षया परिपूर्णं तरो बलं देहसामर्थ्यं सैन्यं च तेनाहीनतरसा । यद्वाऽहीनतरसा परिपूर्णशीघ्रजयनक्रियया बलदत्तापेक्षया वर्षशतमात्रेणापि षट्खंडमहीं हैमवद्वर्षधरपर्वतादारभ्य समुद्रमेखलापर्यन्तपरिपूर्णभरतक्षेत्रभूमिं निर्जित्य देवतामनुष्यवशां स्ववशीकृत्य बभ्राजिरे नवनिधानचतुर्दशरत्नादिभिः शुशुभिरे तेऽपि । तथा ये च भुजोर्जितमदा मुदा मेदुराः स्वर्गभुजः । च पुनर्ये त्रिभुवने सिद्धान्तोक्ताः प्रसिद्धा भुजोर्जितमदा भुजाभ्यामूर्जितो वृद्धिं गतो मदो येषां ते तथा मुदा मेदुराः मुदा आनन्दविशेषेण हर्षप्रकर्षेण वा मेदुरा विमानर्द्धिसुरांगनादिषु पुष्टप्रेमभराः स्वर्गभुजः सुरेन्द्रा-

दयो देवा मेजुः सविलासा बभूवुः। तेऽपि प्राणान्तसमये अत्राणात्राणेन रक्षणसमर्थाश्रयेण रहिताः क्रूरकृतान्तवक्त्र-रदनैर्दग्धा निर्दह्यमाना हा शरणाय दीनानना दश दिशः प्रैक्षन्त क्रूरो दुष्टभयंकरस्वभावः कृतान्तो मरणं तस्य यद्वक्त्रं मुखं तस्मिन् ये रदना दन्तास्तैर्दग्धा बलात्कारेण निर्दह्यमाना नितरां चर्व्यमाणा हा कष्टं तेऽपि शरणाय मरणाद्रक्षणाय दीनानना दीनवदनाः सन्तो दश दिशः स्वशरीरादूर्ध्वाधस्तिर्यक्षु प्रैक्षन्त विलोकयन्ति स्म। तर्हि मरणे समागते तव क आधार इति चिन्तयेत्यर्थः ॥ १ ॥

( स्वागतावृत्तम् )

**तावदेव मदविभ्रममाली, तावदेव गुणगौरवशाली। यावदक्षमकृतान्तकटाक्षैर्नेक्षितो विशरणो नरकीटः**

व्याख्या—विशरणो नरकीटः न विद्यते शरणमाश्रयो यस्य स तथा। नरो मनुष्यः स एव कीटो जन्तुः। जातावे-कथनं। मदविभ्रममाली तावदेव मद आनन्दविनोदो जातिकुलबलरूपाद्यभिमानश्च तेन माली सविलासशोभमानः तेन संयुक्तो यः तावदेव साकल्येन कालतो भवति। तथा गुणगौरवशाली तावदेव गुणा रूपसौभाग्यकलाचातुर्यसौन्दर्यज्ञानादयस्तैर्गौरवमादरभक्तिसत्कारस्तेन शाली शोभितः तावत् साकल्येन कालतस्तावन्मात्रमेव भवति। यावदक्षमकृतान्तकटाक्षैर्नेक्षितः यावन्मात्रमेव कालं अक्षमा असह्यस्वभावत्वेन केनापि हन्तुमशक्याः कृतान्तस्य मरणस्य कटाक्षाः वक्ररोषारुणविकूणितनेत्रप्रान्तास्तैः नेति नैव ईक्षितो विलोकितः। अतः शरणं गवेषयेत्यर्थः ॥ २ ॥

( शिखरिणीवृत्तम् )

प्रतापैर्व्यापन्नं गलितमथ तेजोभिरुदितैर्गतं धैर्योद्योगैः श्लथितमथ पुष्टेन वपुषा ।
प्रवृत्तं तद्द्रव्यग्रहणविषये बान्धवजनैर्जने कीनाशेन प्रसभमुपनीते निजवशम् ॥ ३ ॥

व्याख्या—कीनाशेन भृशं निजवशमुपनीते जने प्रतापैर्व्यापन्नं कीनाशः कुत्सितमनिष्टं नाशयतीति कीनाशो मरणं तेन भृशमतिशयेन निजवशं स्वाधीनं उपनीते अत्यन्ततया प्रापिते सति जने प्राणिनि प्रतापैस्तेजोभिः शक्तिप्रभावैरिति यावत् व्यापन्नं स्वयमेव विनष्टं भवति । अथानन्तरमुदितैः संपद्यौवनादिभिरुद्भूतैस्तेजोभिः सप्रकाशमहिमभिः गलितं स्वयमेव विलयं प्राप्तं भवति । तथा धैर्योद्योगैर्गतं धैर्यं विपत्सु निर्विकारव्याकुलतारहितचित्तस्थैर्यं उद्योगाः प्रारब्धधर्मकार्यादेः संपादनोद्यमास्तैः गतं स्वयमेव दूरतरं विनष्टं । अथानन्तरं पुष्टेन वपुषा श्लथितं पुष्टेन इष्टभोजनरसायनपुण्यसामर्थ्यबलिष्ठेन वपुषा शरीरेण श्लथितं स्वयमेव सर्वसामर्थ्यराहित्यं प्राप्तं । बान्धवजनैस्तद्द्रव्यग्रहणविषये प्रवृत्तं बान्धवा गोत्रिणस्त एव जना लोकास्तैः तद्द्रव्यं म्रियमाणस्य धनं तस्य यद्ग्रहणं स्वायत्तीकरणं तस्मिन् प्रवृत्तं स्वयमेव गृहीतं भवतीत्यतो धर्मशरणागतो भवेत्यर्थः ॥ ३ ॥

अथ सम्यग्दृष्टिभिरशरणभावनाऽनेन प्रकारेण सदैव भावनीयेति गेयपद्याष्टकेन विभावयति—

स्वजनजनो बहुधा हितकामं प्रीतिरसैरभिरामम् । मरणदशावशमुपगतवन्तं रक्षति कोऽपि न सन्तम् ॥ १ ॥

विनय विधीयतां रे श्रीजिनधर्मः शरणम् । अनुसंधीयतां रे शुचितरचरणस्मरणम्, वि० ॥ २ ॥ ध्रुवपदं

व्याख्या—हे विनय हे मोक्षाभिलाषिन् तवायं स्वजनजनः स्वकीयो जनो जनकजननीभ्रातृभगिनीभार्यादिलोकः । बहुधा बहुभिः प्रकारैर्धनागमारोग्यवृद्धिनिरुपद्रवादिचिन्तनैः । हितकामं हितं पथ्यं तत्करणे कामा मनोरथा यस्य स तथा तं । प्रीतिरसैरभिरामं प्रीतिरसास्तवोपरि प्रेमरसप्रकारास्तैः अभिरामः सुन्दरपरिणामस्तं तथाविधं वर्तमानमपि समागते मरणे शरणाय नालं जानीहि । सन्तं सुखदं तदपि । मरणदशावशमुपगतवन्तं कोऽपि न रक्षति मरणमायुषः क्षयस्तद्रूपा दशाऽवस्था तस्या वशमधीनत्वमुपगतवन्तं प्राप्तं सन्तं कोऽपीति उक्तस्वजनमध्यात्कश्चिदेकोऽपि न रक्षति न मोचयतीति भावनीयमित्यतः श्रीजिनधर्मः शरणं विधीयतां श्रीः सर्वथाऽजरामरत्वप्रापणसामर्थ्यं तया युक्तो जिनप्रणीतो धर्मो द्वादशांगोक्तकृत्यविधानं स श्रीजिनधर्मः । भवद्भिरस्माभिरपि शरणमयमेव सत्याधार इति विधीयतां आश्रीयतां । तत्प्राप्तये च शुचितरचरणस्मरणमनुसंधीयतां शुचितरं सर्वथा सर्वदोषाभावादतिशयेन पवित्रं चरणं जिनराजपादयुग्मं चारित्रं च तस्य स्मरणं भजनं चारित्रखंडनस्य पर्यालोचनं अनुसंधीयतां स्वहृदयेऽखंडप्रेमधारया संयोज्यतां । चारित्रं च यत्र यत्र दोषसेवनया खंडितं ज्ञायते तत्र तत्र पुनः पूर्णं क्रियतां । एतत्कृते सत्येव जिनधर्मशरणं कृतं भवति, नान्यथेत्यर्थः ॥ १–२ ॥

तुरगरथेभनरावृतिकलितं, दधतं बलमस्खलितम् ।
हरति यमो नरपतिमपि दीनं, मैनिक इव लघुमीनम्, वि० ॥ ३ ॥

व्याख्या—तुरगरथेभनरावृतिकलितं अस्खलितं बलं दधतं नरपतिमपि दीनं यमो हरति तुरगा अश्वाः, रथाः स्यन्दनानि, इभा हस्तिनः, नराः पदातयः, द्वन्द्वे कृते तेषामावृतिः रक्षणाय सर्वतः परिवेष्टनं तेन कलितं सहितमपि तथाऽस्खलितमसह्यं केनापि रोद्धुमशक्यं बलं देहसामर्थ्यं पराक्रममिति यावत् दधतं धारयन्तं नरपतिं राजानमपि दीनमशरणं सति शरणार्थं दीनताकलितमुखं यमो मरणं हरति स्ववशं नयति। कमिव? मैनिको लघुमीनमिव मीनान् नाशयतीति मैनिकः ककणपक्षी किलकिलो नाम लोकप्रसिद्धः। स यथा लघुमीनं जले निपत्य क्षुद्रमत्स्यं चंच्वा गृहीत्वा गगनतलं याति, तद्वत्प्रेतराट् स्वजनसैन्यवर्गमध्यतो जीवं गृहीत्वा याति, न कोऽपि मोचयति, तस्माद्धर्मं भज इत्यर्थः ॥३॥

प्रविशति वज्रमये यदि सदने, तृणमथ घटयति वदने।
तदपि न मुञ्चति हतसमवर्ती, निर्दयपौरुषनर्ती, वि० ॥ ४ ॥

व्याख्या—यदा यदा प्राणी मरणभयतो वज्रमये सदने प्रविशति वज्रतुल्यसारवज्रिरत्नचितिनिर्मितं वज्रमयं तस्मिन् सदने गृहे प्रविशति तत्र तिष्ठति तदपि। अथापि मरणस्य प्रार्थनापरो वदने मुखे तृणं पशुवद्ग्रासायथं घटयति दशनैर्गृह्णाति तदपि। निर्दय पौरुषनर्ती हतसमवर्ती तदपि न मुञ्चति निर्गता दया कृपा येभ्यस्तानि च तानि पौरुषाणि पराक्रमविशेषाः तैर्नृत्यति सानन्दं विलसति यः स तथा। हतसमवर्ती हतो ज्ञानिभिस्तिरस्कृतः समवर्ती गुण्यगुणिबालवृद्धदेवनरपशुनारकादिषु निर्दयत्वेन तुल्यतया प्रवृत्तिर्यस्य स समवर्ती पूर्वोक्तसर्वोपायकृतेऽपि तदपि प्रेतराट् प्राणापहरणं न मुञ्चति न त्यजति। अतो निरुपायमेकं धर्मशरणमित्यर्थः ॥ ४ ॥

विद्यामंत्रमहौषधिसेवां, सृजतु वशीकृतदेवाम्।
रसतु रसायनमुपचयकरणं, तदपि न मुञ्चति मरणम्, वि० ॥ ५ ॥

वशीकृतदेवां अवशा वशा यया संपद्यमानाः कृता भवन्तीति
व्याख्या—भो भव्या यदि कश्चिन्मरणात्स्वमोचनाय विद्यामंत्रमहौषधिसेवां सृजतु विद्या रोहिणीप्रज्ञप्त्यादिः, मंत्रा हरि-
वशीकृता देवा वरुणकुबेरादयो यया सा तथा तां। विद्यामंत्रमहौषधिसेवां सृजतु विद्या रोहिणीप्रज्ञप्त्यादिः, मंत्रा हरि-
नैगमेषिवज्रपञ्जरादयः, महौषधयः सप्रभावा नृपशीतभविसहदेवीपुत्रंजारीविष्णुक्रान्तादिकास्तासां सेवाराधना तां सृजतु
प्राणी करोतु। उपचयकरणं रसायनं रसतु उपचयो मरणजयार्थं बलवृद्धिस्तत्करणं तत्कारकं यद्रसायनं रसेन्द्रताम्र-
भस्मादि तद्रसतु भक्षयतु। तदपि तथाकृतेऽपि मरणं न मुञ्चतीत्यतो धर्मशरणं कार्यमित्यर्थः ॥ ५ ॥

अथ जरातोऽपि रक्षकं शरणं नास्तीत्याह—

वपुषि चिरं निरुणद्धि समीरं, पतति जलधिपरतीरम्।
शिरसि गिरेरधिरोहति तरसा, तदपि स जीर्यति जरसा, वि० ॥ ६ ॥

व्याख्या—यः पुमान् जराया भयतो रक्षणकृते समीरं शरीरपुष्टिहेतुं मत्वा उच्छ्वासनिःश्वासवायुस्तं चिरं प्रतिदिनं
प्रभूतकालं यावत् वपुषि शरीरमध्ये निरुणद्धि विष्कंभयति स्तंभयति। जलधिपरतीरं पतति। तथोभयान्महान्तरालविधानाय
दूरं प्रणश्य जलधेः समुद्रस्य परमुत्तरतटं गत्वा पतति अतिष्ठत्। तरसाऽतिशीघ्रतया नंष्ट्वा गिरेः पर्वतस्य शिरसि

समुन्नते शिखरेऽधिरोहति समारूढो भवति । तदपि पूर्वोक्तसर्वप्रकारे कृतेऽपि स पुमान् जरसा जरा वयोहानिस्तया जीर्यते जीर्णदेहो भवत्येव । यत एवं ततस्तत्रापि सर्वशक्तिमान् धर्म एव शरणमित्यर्थः ॥ ६ ॥

सृजतीमसितशिरोरुहललितं मनुजशिरः सितपलितम् ।

को विदधानां भूघनमरसं प्रभवति रोद्धुं जरसम्, वि० ॥ ७ ॥

व्याख्या—असितशिरोरुहललितं मनुजशिरः सितपलितं सृजतीं भूघनं अरसं विदधानां जरसं को रोद्धुं प्रभवति न सितान्यसितानि श्यामानि शिरसि मस्तके रोहन्ति समुद्भवन्तीति शिरोरुहाणि केशाः कर्मधारये कृते तैर्ललितं विराजितं मनुजशिरः मनुजा मनुष्यास्तेषां शिरो मस्तकं तत्सितपलितं सितं कर्पासबीजवद्धवलं सृजतीं कुर्वाणां । तथा भूघनं नरादिशरीरं अरसं निःसारं सामर्थ्यरहितमिति यावत् विदधानां कुर्वतीं जरसं जरां राक्षसीं कः किंनामको देवः पुरुषो वा रोद्धुं निवारयितुं प्रभवति समर्थोऽस्ति ? न कोऽपि । यद्यपि देवादीनां शिरसि पलितं कर्तुं न शक्नोति, लोकस्थितेरलंघनीयत्वात्, तथापि शक्तिहानिं तु सर्वेषां करोतीत्यर्थः ॥ ७ ॥

अथ सर्वोपायासाध्ययोर्जरामरणयोरशरणत्वचिन्ता दूरेऽस्तु किञ्चिदुपायसाध्ये रुगुदयेऽपि पीडाविभागिशरणं नास्तीत्याह—

उद्यत उग्ररुजा जनकायः कः स्यात्तत्र सहायः ।

एकोऽनुभवति विधुरुपरागं विभजति कोऽपि न भागम्, वि० ॥ ८ ॥

व्याख्या—यत्र काले जनकायः जनो मनुष्यतिर्यङ्नरकजः प्राणी तस्य कायो देहः स उग्ररुजा उद्यतः उग्राऽत्युत्कट-भयानका रुक् सन्निपातभगंदरादिरोगस्तया उद्यतः प्रवृत्तो व्याप्तः स्याद्भवेत्। तत्र तस्मिन् काले कः कश्चो देवो मनुष्यः स्वजनो वा सहायो व्यथाविभागग्रहणेन सहचारी दुःखविभागीति यावत् स्याद्भवति, न कोऽपि, एकाक्येव पीडां सहते। दृष्टान्तमाह—विधुरुपरागमेकोऽनुभवति न कोऽपि भागं विभजति विधुश्चन्द्र उपरागं राहुग्रसनग्रासव्यथां एको-ऽसहायोऽनुभवति भुनक्ति, न कोऽपि ग्रहनक्षत्रतारकादिः भागं ग्रासांशं विभजति स्तोकं स्तोकं स्वयं भुंक्ते। तद्वत्कर्मो-दयो रोगादिभिः कर्तारं ग्रसते तदा सोऽप्येकाकी भुङ्क्ते इत्यर्थः ॥ ८ ॥

अथाशरणभावनामुपसंहरन्नाह—

शरणमेकमनुसर चतुरंगं परिहर ममतासंगम्।
विनय रचय शिवसौख्यनिधानं शान्तसुधारसपानम्, वि० ॥ ९ ॥

॥ इति श्रीशान्तसुधारसगेयकाव्येऽशरणभावनाविभावनो नाम द्वितीयः प्रकाशः ॥

व्याख्या—हे विनय हे निवृत्तीच्छक भोक्तप्रकारेण सांसारिकाः सर्वे भावा जीवस्य शरणं न भवन्तीति ज्ञात्वा एकं चतुरंगं शरणमनुसर एकमन्यत्सर्वं मुक्त्वा एकमद्वितीयं चतुरंगं चत्वार्यंगानि दानादिप्रकारा यस्य स चतुरङ्गो धर्मस्तं शरणं अयमेव ममैक आधारोऽस्तीति बुद्धिमनुसर सततं स्वीकुरु। तथा ममतासङ्गं परिहर ममैतद्धनादिकमिति बुद्धि-

ममता तस्याः संगः संबन्धो रागस्तं परिहर निवारय । तत्कृत्वा शिवसौख्यनिधानं शान्तसुधारसपानं रचय शिवो निरुपद्रवो मोक्षस्तस्मिन् यत्सुखस्य जावः सौख्यं परमानन्दस्तस्य निधानमक्षयजांडागारं तदीदृशं शान्तसुधारसपानं ज्ञानवैराग्यादिनिजसहजपरिणामरूपपीयूषास्वादनं रचय विधेहीत्यर्थः ॥ ए ॥

॥ इति श्रीतपागच्छीयसंविग्नशाखीयपरममुनिश्रीबुद्धिविजयमुख्यशिष्यश्रीमुक्तिविजयगणिसतीर्थ्यतिलकमुनिश्रीवृद्धिविजयचरणयुगसेविना पंडितगंजीरविजयगणिना विरचितायां शान्तसुधारसटीकायामशरणजावनाविजावनो नाम द्वितीयः प्रकाशः समजनि ॥



# ॥ तृतीयः प्रकाशः ॥

अथानन्तरं जीवानामशरणता दर्शिता। अशरणास्तु संसारे परिभ्रमन्तीत्यनेन संबन्धेनायातां संसारभावनां भावयन्नाह–

( शिखरिणीवृत्तत्रयम् )

इतो लोभः क्षोभं जनयति दुरन्तो दव इवोल्लसँल्लाभांभोभिः कथमपि न शक्यः शमयितुम् ।
इतस्तृष्णाऽक्षाणां तुदति मृगतृष्णेव विफला कथं स्वस्थैः स्थेयं विविधभयभीमे भववने ॥ १ ॥

व्याख्या–यत्र इतो दुरन्तो लोभो दव इव क्षोभं जनयति यस्मिन् इत एकस्या दिशः सकाशात् दुरन्तो लोभो दव इव क्षोभं जनयति दुःखेन महाप्रयासेनान्तोऽवसानं शमनमिति यावत् वा दुष्टः अन्तः पर्यवसानं यस्य स तथाभूतो लोभः अप्राप्तप्रापणेच्छा प्राप्तस्य संरक्षणबुद्धिः स दव इव ज्वलद्दावानलतुल्यं क्षोभं संतापं जनयति उत्पादयति । उल्लसन् कथमपि लाभांभोभिः शमयितुं न शक्यः उल्लसन् लोभदवजन्यसंतापो वृद्धिं गच्छन् कथमपि कैश्चिन्महार्थप्राप्तिरूपैरपि लाभांभोभिः लाभा अप्राप्तानां प्राप्तयस्त एवांभांसि जलानि तैः शमयितुं निर्वापयितुं न शक्यो न साध्यः । इतो मृगतृष्णेव विफला अक्षाणां तृष्णा तुदति इतोऽन्यस्या दिशः सकाशात् मृगतृष्णेव विफला मृगतृष्णा निदाघकाले मध्याह्ने रविकिरणसंतप्तसिकतासु यो निर्जलेऽपि जलभ्रमो भवति सा मृगतृष्णा यथा जलप्राप्तिफलरहिता तद्वद्विफला सुखप्राप्तिफलवर्जिता अक्षाणां तृष्णा इन्द्रियाणां भोगपिपासा तुदति जीवान् सुखभ्रान्त्या व्यथयति । तत्र विविधभयभीमे भववने स्वस्थैः कथं स्थेयं ? तस्मिन् विविधानि शारीरमानसिकरोगशोकाजीविकावियोगादिभ्यो जातानि यानि भयानि

यावत्। कथं केनोपायेन स्थेयमस्मान्निर-
त्रासदुःखानि तैर्नामे भयानके भववने संसारारण्ये स्वस्थैर्निराकुलैर्निर्भयैरिति यावत्॥ १ ॥
न्यैर्भवस्थजनैः स्थातव्यं ? न केनापि, नास्त्येव [illegible] उपायो येन सर्वथा जनो निराकुलो भवेदित्यर्थः ॥ १ ॥

गलत्येका चिन्ता भवति पुनरन्या तदधिका मनोवाक्कायेहाविकृतिरतिरोषात्तरजसः ।
विपद्गर्तावर्ते झटिति पतयालोः प्रतिपदं न जन्तोः संसारे भवति कथमप्यार्तिविरतिः ॥ २ ॥

संसारे झटिति विपद्गर्तावर्ते पतयालोर्जन्तोः प्रतिपदमेका चिन्ता गलति पुनरन्या तदधिका भवति मनो-
व्याख्या—संसारे झटिति विपद्गर्तावर्ते पतयालोर्जन्तोः ... झटिति शीघ्र-
वाक्कायेहाविकृतिरतिरोषात्तरजसः कथमप्यार्तिविरतिर्न भवति तावदस्मिन् संसारे ज्ञाननेत्राभावादन्धस्य झटिति शीघ्र-
तयाऽविलंबेन विपन्महाविपत्तिस्तया भृतः प्रचुरयातनास्थानमिति यावत् ईदृशो गर्तो दुर्लंघ्यभूमिखड्डुसदृशो भवखड्डु-
स्तस्मिन् विपद्गर्ते पतयालुः स्वतः पतनशीलस्तस्य पतयालोः जन्तोः संसारिजीवस्य प्रतिपदं क्षणे क्षणे स्थाने स्थाने भवे
भवे चेति यावत्। एका चिन्ता गलति यावदेका पूर्वोत्पन्ना चिन्ता शरीरकुटुंबपालनधनार्जनसुखप्राप्त्युपायरूपाऽर्तिर्वि-
चारणेति यावत् गलति किञ्चित् स्रंसते तावत्पुनरन्या नवीना तदधिका तस्याः सकाशादतिप्रभूता भवति समुत्पद्यते ।
तन्निमित्तप्रवृत्ता या मनोवाक्कायेहा मनोवचनकायानां ईहा विविधाभिलाषो विचारश्च, विकृतिस्तेषामेव विकाराः, रतिः
पञ्चविधविषयप्रेम, रोषोऽनिष्टे जाते द्वेषः एतेषां समाहारद्वन्द्वे कृते तस्मादशुद्धहेतोरात्तं गृहीतं रजो रज इव रजः कर्म-
धूलिपुञ्जो येन स तथा तस्य कथमपि केनापि प्रकारेण आर्तिः सन्तापश्चित्तोद्वेगस्तया विरतिर्विरामो विच्छेद इति यावत्
नेति न जायते भवे जीवः सदैवार्तिपीडितोऽस्तीत्यर्थः ॥ २ ॥

अशुचिजननीकुक्षिकुहरे ततो जन्म प्राप्य प्रचुरतरकष्टक्रमहतः।
सहित्वा संतापानशुचिजननीकुक्षिकुहरे ततो जन्म प्राप्य प्रचुरतरकष्टक्रमहतः।
सुखाश्वासैर्यावत्स्पृशति कथमप्यर्तिविरतिं जरा तावत्कायं कवलयति मृत्योः सहचरी ॥ ३ ॥

व्याख्या—अशुचिजननीकुक्षिकुहरे संतापान् सहित्वा अशुचिरपवित्रो जनन्या मातुः कुक्षिरुदरं तद्रूपो यः कुहरो गुहाविवरस्तस्मिन् संतापान् परिसंक्लेशान् सहित्वा नवमासपर्यन्तं भुक्त्वा। ततः प्रचुरतरकष्टक्रमहतो जन्म प्राप्य ततो नवमासानन्तरं प्रचुरतराणि सुबहूनि कष्टानि योनिसंकटादिपीडनप्रकाराणि तेषां क्रमो नियतत्वादुपर्युपरि दुःखश्रेणिः तेन हतः प्रहतः जन्म योनितो निर्गमं प्राप्य लब्ध्वा यावत्सुखाश्वासैः कथमप्यर्तिविरतिं स्पृशति यावद्यावत्कालान्तरे सुखाश्वासैः यान्यसुखान्यपि सुखसदृशतया आश्वासन्ते मोहोदयेन प्रतिभासंते ते सुखाश्वासा भोगासङ्गास्तैः कथमपि महता कष्टप्रबन्धेन अर्तिविरतिं संतापविरामं स्पृशति लभते। तावन्मृत्योः सहचरी जरा कायं कवलयति तावन्मात्र-कालविभागे मृत्योर्मरणस्य सहचरी प्राणप्रिया जरा वार्द्धक्यं कायं मनुष्यदेहं कवलयति भक्षयतीत्यतः संसारिणः संतापविरामः क्व ? न क्वापीत्यर्थः ॥ ३ ॥

( उपजातिवृत्तम् )

विभ्रान्तचित्तो बत बंभ्रमीति पक्षीव रुद्धस्तनुपञ्जरेऽङ्गी।
नुन्नो नियत्याऽतनुकर्मतन्तुसंदानितः सन्निहितान्तकौतुः ॥ ४ ॥

व्याख्या–बत अङ्गी तनुपञ्जरे पक्षीव रुद्धो नियत्या नुन्नोऽतनुकर्मतन्तुसंदानितः सन्निहितान्तकौतुः विभ्रान्तचित्तो बंभ्रमीति वर्तते खेदे कीदृक् कष्टं वर्तते ? अङ्गी संसारी जीवः तनु शरीरं तस्य तदेव वा पञ्जरमस्थ्यादिपुद्गलावयव-वृन्दं तस्मिन् रुद्धो वेष्टितो जातगतिभङ्गः नियत्याऽदृष्टेन नुन्नः प्रेरितः अतनुकर्मतन्तुसंदानितः न तनूनि स्वल्पानि अतनूनि महान्ति कर्माणि ज्ञानावरणीयादीनि तान्येव तन्तवो ग्राह्या जीवजानोर्ग्रासाः दवरिकासमूहो वेति यावत्, तैः संदानितो बद्धः संनिहितान्तकौतुः सन्निहितः सदा समीपतरवर्ती अन्तको मरणं स एव ओतुर्मार्जारस्तद्भयतो विभ्रान्तचित्तो विशेषेण भ्रांतं छिदितं विह्वलीकृतं चित्तं मनो यस्य स तथाभूतः बंभ्रमीति अनादिकालतः सर्वस्मिँल्लो-केऽतिशयेन पर्यटतीत्यर्थः ॥ ४ ॥

कियत्कालं पर्यटतीत्याह—

( अनुष्टुब्वृत्तम् )

**अनन्तान्पुद्गलावर्ताननन्तानन्तरूपभृत् । अनन्तशो भ्रमत्येव जीवोऽनादिभवार्णवे ॥ ५ ॥**

व्याख्या–जीवोऽनादिभवार्णवेऽनन्तानन्तरूपभृत् अनन्तान् पुद्गलावर्तान् अनन्तशो भ्रमत्येव, जीवोऽयं संसारी प्राणी, अनादिर्न विद्यते आदिः प्रवृत्तेः प्रथमदिवसादिर्यस्य भवार्णवस्य तस्मिन्ननादिभवार्णवे अनन्तसंख्यैर्गुणितोऽनन्तसंख्येयो राशिरनन्तानन्तस्तावत्परिमाणानि रूपाणि नरकपशुनरदेवविकलैकेन्द्रियाद्याकाराणि तानि बिभर्ति धारयतीति यः स तथाविधः सन् अनन्तान् पुद्गलावर्तान् अनन्ताभिरुत्सर्पिण्यवसर्पिणीभिरुन्मितः काल एकः पुद्गलावर्त-

स्तेऽनन्ता यस्मिन् परिभ्रमणे तान् पुद्गलावर्तान् पुद्गलाः परमाणवस्ते सर्वेऽपि केनचिदेकेन जीवेन औदारिकवैक्रियाद्यैरेकैस्त्रिभिः शरीरैर्गृहीत्वा मुक्ता यावता कालेन भवन्ति स पुद्गलावर्तः पुद्गलानामावर्तः पूर्वगृहीतानां त्यजनेनोत्तरोत्तरग्रहणानि पुद्गलावर्तास्ताननन्तान् अनन्तशोऽनन्तानप्यनन्तवारान् भ्रमत्येव पर्यटन्नेवास्ते इत्यर्थः ॥ ५ ॥

अथ संसारभावनां गेयपद्याष्टकेन भावयन्नाह—

कलय संसारमतिदारुणं जन्ममरणादिभयभीत रे। मोहरिपुणेह सगलग्रहं प्रतिपदं विपदमुपनीत रे, क० १

स्वजनतनयादिपरिचयगुणैरिह मुधा बध्यसे मूढ रे। प्रतिपदं नवनवैरनुभवैः परिभवैरसकृदुपगूढ रे, क०

व्याख्या–रे मूढ स्वजनतनयादिपरिचयगुणैर्मुधा बध्यसे। रेकारोऽधमसंबोधने। रे मूढ रे मूर्खशेखर अधमाधम निर्विचारेति यावत्। क्वचिदन्तेऽपि हे भवेदित्यतो मूढ रे इति पाठः। स्वजनतनयादिपरिचयगुणैः स्वकीया जनाः स्वजना मातापिताभ्रातृप्रभृतयः तनयाः सुतसुताः आदिग्रहणाद्दासादिद्विपदचतुष्पदभूसदनधनवस्त्रालङ्कारादयो ग्राह्याः, तैः सह ये परिचया नानाविधाः संबन्धाः तद्धेतुका ये गुणाः रागद्वेषमोहोत्पादिताः कर्मबन्धफलरूपा निबिडस्थूलदीर्घरज्जवस्तैः। इह लोककालस्थायिनि जन्मनि। मुधा सर्वथा स्वार्थसिद्धेरभावाद्व्यर्थमेव। बध्यसे संयन्त्रितो भवसि मा प्रतिबन्धवशो भव। रे जन्ममरणादिभयभीत संसारमतिदारुणं कलय रे मूढ जीव जन्म भवान्तरं मरणं प्राणहानिः, आदिपदाज्जरा वार्द्धक्यं ग्राह्यं तेभ्यो भयानि भीतयस्तैर्भीतस्त्रस्तस्तत्संबोधनं रे जन्ममरणादिभयभीत। संसारः चतुर्गतिपरिभ्रमणात्मकं भवस्वरूपं सोऽतिदारुणोऽतिशयेन भयानको वर्ततेऽतस्तं कलय ज्ञानदृष्ट्या विलोकय, विलोकय

तस्मान्निस्ताराय प्रयतो भव । यत इह भवे । मोहरिपुणा मोहनीयज्ञानावरणोदयशत्रुणा । सगलग्रहं संसारिजीवानां गलहस्तिकाप्रदानसहितं । प्रतिपदं क्षणे क्षणे सर्वत्र । विपदं विपत्तिं कष्टभरं । उपनीतं त्वया सह प्रापितं । प्रतिपदं स्थाने स्थाने भवे भवे । नवनवैरपूर्वैः । अनुभवैः शुभाशुभकर्मफलभोगैः । परिभवैः परिभवा महातिरस्कारपूर्विकाः कदर्थनास्तैरसकृत् पुनः पुनः उपगूढं समालिङ्गितं व्याप्तमिति यावदित्यर्थः ॥ १-२ ॥

**घटयसि क्वचन मदमुन्नतेः क्वचिदहो हीनतादीन रे। प्रतिभवं रूपमपरापरं वहसि बत कर्मणाधीन रे, क०**

व्याख्या—अहो हे चेतन महदाश्चर्यं वर्तते, यत्त्वं कर्मवशगः क्वचन कस्मिंश्चिद्भवे काले क्षेत्रे वा । मदसमुन्नतेः मदा जातिकुलयौवनादिप्राप्तिवशात्समुत्पन्ना गर्वप्रकारास्तेभ्यः समुद्भूता या समुन्नतिः स्वप्रकर्षतावती बुद्धिस्तस्याः सकाशादुन्नतेस्तुभ्यं घटयसि प्रवर्तयसि । क्वचिद्धीनतादीन रे क्वचित् कस्मिंश्चिज्जन्मनि हीनतादीनोऽशुभकर्मोदयेन जातिकुलबलादिहीनप्राप्तत्वेन दीनभावेन दुःखितत्वं भजसि । बत कष्टं । त्वं संसारे कर्माधीनः प्रतिभवमपरापरं रूपं वहसि कर्माधीनो ज्ञानावरणीयादिकर्मभिरायत्तीकृतः प्रतिभवं भवे भवे अपरापरं भिन्नं भिन्नं पूर्वपूर्वरूपादन्यदन्यदिति यावत् । रूपं वर्णाकारस्वभावनटनं वहसि प्राप्नोपि लभसे इत्युक्तप्रकारेण विडंबनां लभसे तथापि भवान्नोद्विजसेऽतः किमधिककथनेनेत्यर्थः ३ ॥

**जातु शैशवदशापरवशो जातु तारुण्यमदमत्त रे। जातु दुर्जयजराजर्जरो जातु पितृपतिकरायत्त रे, क०॥४॥**

व्याख्या—हे आत्मन् त्वं भवे भवान्तरे यत्परावर्तनं लभसे तत्तु दूरे तिष्ठतु यत्त्वमेकस्मिन्नेव जन्मनि परावर्तनं कर्मवशो लभसे तत्तु चिन्तय । जातु कदाचित् शैशवदशापरवशः शिशुः स्तनपायी बालः तद्भावः कर्म वा शैशवं तस्य

दशा तद्रूपा अवस्था तस्या वशोऽधीनः पुरीषमथनादिविकिंचनां यासि । जातु तत्रैव भवे कदाचित् । तारुण्यमदमत्त रे तारुण्यं यौवनवयस उदयस्तेन हेतुना मदमत्तो बलरूपकामोदयादिमदेन गर्वेण मत्तः गर्वान्धो भवसि । जातु तत्रैव जन्मनि कदाचिद्वार्धक्ये दुर्जयजराजर्जरः दुःखेन जेया या जरा बलादिहानिस्तया जर्जरः सर्वाङ्गजीर्णत्वं गतः सन् परा-भूयसे । जातु कदाचित्तत्रैव चरमावस्थायां । पितृपतिकरायत्त रे अन्तकहस्ते प्राप्तः सन् सर्वं हित्वा भवान्तरं यासीति भवात् किं नोद्विजसे धिक् त्वामित्यर्थः ॥ ४ ॥

पुनरपि भवेऽसमञ्जसं भवति तच्चिन्तयेत्याह—

व्रजति तनयोऽपि ननु जनकतां तनयतां व्रजति पुनरेष रे ।
भावयन्विकृतिमिति भवगतेस्त्यजतमां नृभवशुभशेष रे, क० ॥ ५ ।

व्याख्या—ननु तनयोऽपि जनकतां व्रजति । एष पुनस्तनयतां व्रजति । इति भवगतेर्विकृतिं भावयन् त्यजतमां नृभ-वशुभशेष रे, नन्विति कोमलामंत्रणे हे मन्दमतिचेतन संसारे पूर्वं य इति शेषः, तनयोऽपि पुत्रोऽपि सन् स जनकतां पितृत्वं व्रजति गच्छति प्राप्नोतीति यावत् । तापसश्रेष्ठिराहुकपुत्रयोरिव । एष पुनर्जनकस्तु तनयतां पुत्रत्वं व्रजति लभते तयोरिव । इत्येवंरूपां भवगतेः संसारवर्तनायाः विकृतिं विपर्यासस्वभावं भावयन् हृदये विचारयन् त्यजतमां यथा पुन-रत्रागमनं न स्यात्तथा प्रकर्षेण भवहेतून् परिहर । अद्यापि तव नृभवशुभशेषः नृभवो नरजन्म तस्य शुभं पुण्यकर्म तस्य शेषः कियानंशोऽस्तीत्यतः प्रयत्नं कुर्वित्यर्थः ॥ ५ ॥

**यत्र दुःखार्त्तिगददवलवैरनुदिनं दह्यसे जीव रे। हन्त तत्रैव रज्यसि चिरं मोहमदिरामदक्षीव रे, क०॥६॥**

व्याख्या–रे जीव यत्र दुःखार्त्तिगददवलवैरनुदिनं दह्यसे हन्त रे मोहमदिरामदक्षीव तत्रैव चिरं रज्यसे रे निर्विचार रे जीव किं न बुध्यसे यत्र संसारे विषयादिके च त्वं दुःखार्त्तिगददवलवैः दुःखानि दुर्गतिदुर्जराजीविकारोगशोकभयानि कष्टानि अर्त्तयश्चिन्तासंतापोद्भूता मनस उच्चाटविशेषाः गदाः कुष्ठजगंदरसन्निपाता दमद रोगास्त एव त्राससंतापकारित्वेन दवलवा दवाग्निस्फुलिङ्गास्तैः अनुदिनं प्रतिदिवसं संततं दह्यसे दग्धमनोवाक्कायो भवसि । हन्तेति खेदे रे मोहमदिरामदक्षीव रे मोहमदिरामत्तनष्टबुद्धे तत्रैव मोक्षस्वरूपे भवे विषये च चिरं वर्षशतादिपर्यन्तं रज्यसे रञ्जितसकलात्मप्रदेशैः प्रमुदितो भवसि, परंतु स्वहिताय नोद्यच्छसीत्यर्थः ॥ ६ ॥

**दर्शयन् किमपि सुखवैभवं संहरंस्तदथ सहसैव रे। विप्रलंभयति शिशुमिव जनं कालबटुकोऽयमत्रैव रे, क०**

व्याख्या–अयं कालबटुको जनं किमपि सुखवैभवं दर्शयन् अथ सहसैव तत्संहरन् अत्रैव शिशुमिव विप्रलंभयति, अयं सर्वलोकप्रसिद्धः कालोऽहोरात्रादिवर्तनारूपः स एव बटुकः मार्गघातिग्रन्थिच्छेदको वा तस्करो भिक्षुको वा । जनं निर्विवेकिसुलाभिलाषिलोकं प्रति । किमपि यत्किञ्चित्तुच्छरूपं सुखवैभवं सुखं संकल्पकल्पितस्त्रीपुत्रविषयधनादिप्रेमणा सातादिबुद्धिः वैभवं संपत्परिवारराज्यैश्वर्यादि तयोः समाहारद्वन्द्वे कृते । तद्दर्शयन् चर्मदृशा ग्राहयन् । अथ दर्शनादनन्तरं सहसैव तत्संहरन् सहसाऽकस्मादेकहेलया तत्पूर्वदर्शितसुखवैभवं संहरन्नविद्यमानमदृश्यं कुर्वन् अत्रैव विद्यमान-

जन्मन्येव तर्हि ज्ञवान्तरे तु किमुच्यतेऽतः शिशुमिव पांसुरमणरतिबालकवदविवेकिजनं विप्रलंजयति सहजपरमसुखप्राप्तिविघातेन विप्रतारयति श्रयो गुरुपर्पटिकाखंफलोजेन चिन्तामणिजिनिंष्पन्नां रत्नमालां मा जहाहीत्यर्थः ॥ ७ ॥

श्रथ संसारज्ञावनामुपसंहरन्नुपदिशति--

सकलसंसारज्ञयज्नेदकं जिनवचो मनसि निवधान रे ।
विनय परिणमय निःश्रेयसं विहितशमरससुधापान रे, क० ॥ ८ ॥

॥ इति श्रीशान्तसुधारसगेयकाव्ये संसारज्ञावनाविज्ञावनो नाम तृतीयः प्रकाशः ॥

व्याख्या--हे विनय सकलसंसारज्ञयज्नेदकं जिनयचो मनसि निवधान रे, हे विनय हे निर्वृतिकामिन् सकलज्ञयज्नेदकं सकलानि समग्राणि सप्तविधानि ज्ञयानीहलोकज्ञीत्यादीनि तानि ज्नेदयति विनाशयति यत्तत्तथाविधं जिनवचः रागद्वेषमोहजेतारो जिनास्तेषां वच उपदेशास्तत् । मनसि हृदये निवधान सम्यग्विचारतया धारय । तथा विहितशमरससुधापान निःश्रेयसं परिणमय विहितं कृतं शमरसो वैराग्यादिमयरतिज्ञावः स एवाजरामरकारी सुधामृतं तस्याः पानं येन स तत्संबुद्धौ रे विहितशमरससुधापान एवं ज्ञूतः सन् निःश्रेयसं मोक्षं कल्याणं परिणमय तन्मयो ज्ञवेत्यर्थः ॥ ८ ॥

॥ इति श्रीतपागच्छीयसंविग्नशाखीयपरममुनिश्रीवुद्धिविजयमुख्यशिष्यश्रीमुक्तिविजयगणिसतीर्थ्यतिलकमुनिश्रीवृद्धिविजयचरणयुगसेविना पंकितगंज्ञीरविजयगणिना विरचितायां श्रीशान्तसुधारसटीकायां ज्ञवज्ञावनाविज्ञावनो नाम तृतीयः प्रकाशः समजनि ॥

## ॥ चतुर्थः प्रकाशः ॥

अनन्तरभवभावना प्रोक्ता । भवे तु जीव एकाक्येव भ्रमतीत्यनेन संबन्धेनायातामेकत्वभावनां विभावयन्नाह । तत्रायं प्रथमः श्लोकः—

( स्वागतावृत्तम् )

**एक एव भगवानयमात्मा ज्ञानदर्शनतरङ्गसरङ्गः। सर्वमन्यदुपकल्पितमेतद्व्याकुलीकरणमेव ममत्वम् ।१।**

व्याख्या—अयं ज्ञानदर्शनतरङ्गसरङ्ग आत्मा भगवानेक एव अयं यो ज्ञानादिस्वगुणैः सर्वस्यापि स्वानुभवप्रत्यक्षोऽस्ति । ज्ञानं विशेषग्राही बोधः, दर्शनं सामान्यग्राही बोधः, तयोस्तरंगास्तिर्यगूर्ध्वाधोदिग्गतज्ञेयभासकल्लोलास्तैः सरंगः सदा विलासी सदा ज्ञानदर्शनविलासवानिति यावत् । आत्मा जीवो भगवान् स्वकीयस्य सुखदुःखबन्धमोक्षादेः कर्तृभोक्तृनिष्ठापनादिसर्वशक्तिमत्त्वेन प्रभुः एक एव एकाक्येव जन्मादिप्रापणे सुखादिभोगेऽसहाय एवानादितो वर्तते । अन्यदात्मव्यतिरिक्तं सर्वं सचेतनाचेतनं समग्रं एतन्ममत्वं एतत्सर्वजनदृश्यमानं यन्ममत्वं मदीयत्वं वर्तते । तत्सर्वं चेतनस्य उपकल्पितं स्वकृतकर्मसंबन्धेन कृतं न परमार्थेन स्वकीयं । व्याकुलीकरणमेव स्वात्मभिन्नेषु मदीयत्वधीरात्मनो रागादिसंपादनेन व्याकुलीकरणं न व्याकुला अव्याकुलाः स्वभावस्वस्था अव्याकुला व्याकुला यथा कृता भवन्तीति व्याकुलीकरणमेवैकं जानीहीत्यर्थः ॥ १ ॥

उक्तार्थमेव विशदयन्नाह—

( प्रबोधतावृत्तत्रयम् )

परवस्तुषु हा स्वकीयता विषयावेशवशाद्धि कल्प्यते॥२॥
अबुधैः परभावलालसालसदज्ञानदशावशात्मभिः।

व्याख्या—हा महद्दुःखमेतद्विलोक्यतां परभावलालसालसदज्ञानदशावशात्मभिर्हि अबुधैः परवस्तुषु विषयावेशवशात् स्वकीयता कल्प्यते, परभावलालसा परेऽस्वात्मभूता भिन्ना इति यावत् ये भावा जीवाजीवरूपपदार्थास्तेषु या लालसाऽतिशायिनी स्पृहा तयाऽऽलसंती समन्ताद्दीप्ता याऽज्ञानदशा निर्विचाराऽबोधपरिणतिस्तस्या वश आयत्तीभूत आत्मा जीवो येषां तैः। हि निश्चयेन अबुधैरज्ञातात्मस्वरूपैरेव। परवस्तुषु स्वात्मभिन्नपदार्थेषु अपि विषयावेशात् पञ्चविषयप्रेमाभिसंक्रमात्। स्वकीयता अस्मदीया एवैते धनसदनस्त्रीपुत्रादय इत्येवं कल्प्यते स्वहृदये मन्यते न तु स्वस्यैकत्वं कलयतीत्यर्थः ॥ २ ॥

विपक्षेण बोधयति—

कृतिनां दयितेति चिन्तनं परदारेषु यथा विपत्तये। विविधार्तिभयावहं तथा परभावेषु ममत्वभावनम्॥३॥

व्याख्या—कृतिनां कृतिनः पंडिता यथार्थवस्तुतत्त्वज्ञातारः पुरुषा इति यावत् तेषां तु। यथा येन प्रकारेण सर्वलोकानां परदारेषु दयितेति चिन्तनं विपत्तये परेषां स्वव्यतिरिक्तनराणां दाराः प्रमदाः परदारास्तासु दयिता इयं मम वल्लभाऽस्ति इत्येवंप्रकारेण ममत्वचिन्तनं हृदयेनापि व्यासक्तिधारणं दूरेऽस्तु वचसा कायेन चासक्तिः। तदपि तेषां विपत्तये

हस्तपादकर्णनासिकादिच्छेदराजदण्डधनापहारप्राणघाताद्यापत्त्यै जायते। तथा तेनैव प्रकारेण विदुषा परभावेषु स्वात्म-भिन्नेषु सचेतनाचेतनपदार्थेषु ममत्वभावनं मदीयत्वबुद्ध्यवधारणं विविधार्तिवदं विविधा अनेकप्रकारा अर्तयो यातनाः कदर्थना इति यावत् तासां पदं प्रापकं जन्मजरामरणदुर्गतिपातादिवृद्धये दृश्यतेऽतः परेषु ममत्वं निवार्यमेवेत्यर्थः ॥ ३ ॥

प्रोक्तप्रकारेण ममत्वविपाकं प्रदर्श्य हितप्रवृत्तिं शिक्षयति—

अधुना परभावसंवृतिं हर चेतः परितोऽवगुंठितम् ।
क्षणमात्मविचारचन्दनद्रुमवातोर्मिरसाः स्पृशन्तु माम् ॥ ४ ॥

व्याख्या—हे चेतः हे प्राणिन् हे मानस चेति। अधुना संप्रति कर्मनृपप्रदत्तावकाशो नरभवार्यक्षेत्रोत्तमजातिकुला-दिप्राप्तिरूपे। परितोऽवगुंठितं परि सर्वतो दिग्विदिग्भ्योऽवगुंठितं कर्मपुद्गलरागादिपरिणामैराच्छादितं परभावसंवृतिमु-त्कटां परभावकृतां परिवेष्टनयवनिकां हर दूरं परिहर। एक एवास्मीति लक्ष्ये कुरु। येन आत्मविचारचन्दनद्रुमवा-तोर्मिरसाः क्षणं मां स्पृशन्तु आत्मनो जीवस्वरूपस्य ये विचाराः सर्वथाऽसङ्गित्वज्ञानदर्शनमयत्वैकत्वाविनाशित्वादिवि-मर्शाः त एव चन्दनद्रुमाः श्रीखण्डवृक्षास्तेभ्यः समुत्पन्ना ये वातोर्मयः सरससुगन्धशीतस्पर्शा वायुकल्लोलास्तज्जन्या ये रसा आत्मस्वरूपविषया रत्यास्वादरूपज्ञानतरङ्गाः क्षणं तद्रूपोत्सव आह्लादः स्वल्पकालो वा मामात्मरूपं स्पृशन्तु प्राप्ता भवन्त्वित्यर्थः ॥ ४ ॥

( अनुष्टुब्वृत्तम् )

एकतां समतोपेतामेनामात्मन् विभावय । लभस्व परमानन्दसंपदं नमिराजवत् ॥ ५ ॥

व्याख्या—हे आत्मन् हे प्राणिन् एनामनन्तरोक्तस्वरूपां समतोपेतां समता सर्वेषु न्यूनाधिकगुणेषु मुक्तामुक्तेष्वात्मस्वरूपेणैकरूपपूर्णतुल्यता तयोपेता सहिता तां । एवंविधामेकतां आत्माऽनादित एक एव न केनापि भार्यापुत्रादिभिः संयुक्तोऽस्तीत्येवं स्वस्यैकत्वं भावय चेतसा निर्धारय । तथानिर्धारणात् नमिराजवत् परमानन्दसंपदं लभस्व । नमिराजा मिथिलाधिप उत्तराध्ययनसूत्रप्रसिद्धः । स यथैकत्वभावनया सिद्धस्तद्वत्त्वमपि परमानन्दसंपदं सर्वप्रकर्षां सहजसुखपूर्णां मोक्षलक्ष्मीं लभस्व प्राप्तो भवेत्यर्थः ॥ ५ ॥

अथ गेयपद्याष्टकेनैकतां भावयन्नाह—

विनय चिन्तय वस्तुतत्त्वं जगति निजमिह कस्य किम् ।
भवति मतिरिति यस्य हृदये दुरितमुदयति तस्य किम्, वि० ॥ १ ॥

व्याख्या—हे विनय हे निर्द्वन्द्व वस्तुतत्त्वं चिन्तय वस्त्वत्रैक आत्मैवास्ति तस्य तत्त्वं पारमार्थिकस्वरूपं नैरञ्जनसत्तां तच्चिन्तय निश्चलैकाग्रमनसा ध्यायस्व इह जगति कस्य किं निजं भवति तथेह त्रिभुवनेऽनन्तसंख्येये जीवगणे जगति विश्वमध्ये कस्य किंनामकस्य देवदत्तादेरेकस्यापि किमिति केनाभिधानेनोल्लापनीयं वस्तु निजं स्वकीयं भवति

ग्यिते ? न कस्यापि किमपि निजमस्ति । यस्य हृदये मनसि । इति प्रोक्तप्रकारविचारवती मतिर्बुद्धिर्वर्तते तस्य तथावि-
ज्ञानवतः । किमिति प्रश्नार्थे । चो भव्य ब्रूहि तस्य दुरितं दौर्भाग्योपद्रवदुर्गतिदुःखादिकं उदयति प्रकटं भवति ? न
दुरितोदयसंभवोऽस्तीत्यर्थः ॥ १ ॥

एक उत्पद्यते तनुमानेक एव विपद्यते । एक एव हि कर्म चिनुते सैककः फलमश्नुते, वि० ॥ २ ॥

व्याख्या—हे आत्मन् त्वमनेकसंबन्धान् व्यर्थमेव कल्पयसि ते च वियदरविन्दवत्त्वयि न सन्ति । कुत एतज्ज्ञायते ?
हि यतस्तनुमान् कार्मणापेक्षया सदैव सशरीरोऽपि संसारी जीवो भवान्तरादागत्य एक उत्पद्यते एकः पुत्रादिसहचारि-
विरहितोऽद्वितीय एव उत्पद्यते जननीकुक्षाववतरणजन्मप्रापको दृश्यतेऽत एक एवाद्वितीय एव विपद्यते प्राप्तजन्मतो
विनश्यन् दृश्यते, न कोऽपि सहानुगच्छन् विलोक्यतेऽतोऽपि । तथा एक एव कर्म चिनुते एकोऽद्वितीय एव कर्माणि
शुभाशुभानि ज्ञानावरणीयादीनि चिनुते बध्नाति न तु त्वत्कृतैस्तैरन्यः कश्चिदतोऽपि । तथा स कर्मणां कर्ता तनुमान्
फलं कर्मविपाकोद्भूतसुखदुःखरूपं एकक एक एव कर्तैव अश्नोति प्राप्नोतीत्यत एक एवेति ज्ञेयमित्यर्थः ॥ २ ॥

अथ ममत्वदोषेणैव जीवस्याधोगतिर्गुणहानिश्च भवतीत्याह—

यस्य यावान् परपरिग्रहो विविधममतावीवधः। जलधिविनिहितपोतयुक्त्या पतति तावदसावधः, वि०॥३॥

व्याख्या—यस्य सर्वोऽप्यात्मा सर्वत्रैक एवास्तीति भावाज्ञस्य यावान् विविधममतापरिग्रहः यावान् यत्परिमाणः शत-
सहस्रादिसंख्यारूप इत्यर्थः । विविधममता विचित्रा विधाः प्रकारा यस्याः सा तथारूपा ममता मातृपितृभार्यापुत्रधनस-

कष्टपापकर्मारंभभारवान् असौ जलधिविनिहि-
दनादिषु मदीयत्वबुद्धिरूपममत्वभावः परिग्रहः स्वीकारस्तद्रूपो वीवधः समुद्रस्तस्मिन् विनिहितस्तंदुलादि-
तपोतयुक्त्या तावदधः पतति असौ प्रोक्तलक्षण आत्मैकत्वाज्ञममत्ववान् जलधिः तावत्तत्परिमाणरूपेण अधो गुणराशिशि-
भारभृत्संस्थापितः पोतः प्रवहणं तस्य या युक्तिर्जलनिमग्नभवने घटना तया समारोपितो भवति
खरात् दुर्गतिगर्ते पतति निमग्नो भवति । अस्यायं भावार्थः—यस्मिन् पोते दशकुंभोन्मितभारः स त्रिहस्तमितो
तदा पोत एकहस्तजले निमग्नो भवति, यस्मिंस्तु शतकुंभोन्मितः स द्विहस्तादिः, यस्मिंस्त्रिशतकुंभभारः
निमज्जति, तथैव यो यावान्ममताप्रकारस्वीकारवान् स तत्परिमाणोन्नतगुणराशिशिखरात् दुर्गतिगर्ते च तावदधः
पततीत्यर्थः ॥ ३ ॥

दृश्यतां परभावविघटनात्पतति विलुठति जृंभते, वि० ॥४॥
स्वस्वभावं मद्यमुदितो भुवि विलुप्य विचेष्टते।

व्याख्या—यथेत्यध्याहार्यं । यथा मद्यमुदितः स्वस्वभावं विलुप्य भुवि विचेष्टते यथा येन प्रकारेण मद्यमुदितो माद्य-
त्युन्मत्तो भवत्यनेनेति मद्यं मदिरा तेन मुदित उन्मादेनैव हर्षितो यः स भुवि मनुष्यलोके स्वभावं मदावेशाद्भाववान् सद्-
व्यवहारं विलुप्य मदावेशाद्विस्मार्य विनाश्येति यावत् विचेष्टते विरूपां विपर्यस्तां वा चेष्टां गानहसननर्तनगालिप्रदा-
नादिक्रियां कुरुते । सा चेष्टा दृश्यतां नेत्रयुगलमुद्घाट्य विलोक्यतां । मद्यपी परभावविघटनात् परभावः स्वभावा-
दन्यो मदभावस्तस्य यत् विविधं घटनमनुचितकर्तव्यरचनं तस्मात्पतति रथ्यादिमार्गेष्वसावधानः विलुठति मद्यजन्यहृ-
दयदाहवशान्मत्स्यवदितस्तत उद्वर्तनं करोति । विजृंभते विक्षिप्तहस्तपादो मुखविवरं विकाश्य शून्यचित्तो भवति ।

तथैव विविधममतास्वीकारवान् स्वज्ञानपरिणतिं विलुप्य दुर्गन्धलालादियुतभार्यापुत्रवदनचुंबनादिकं विचेष्टते । इह परलोके च नानाकष्टसागरे पतति । दुर्गतिदुःखपीडितो भवाब्धे उद्धर्तुं लज्जते । नष्टविवेकत्वेन धनपुत्रादिनिमित्तमार्तः शून्यो भवतीत्यर्थः ॥ ४ ॥

परभावं गतो विरूप एव भवतीति दर्शयन्नाह—

**पश्य काञ्चनमितरपुद्गलमिलितमञ्चति कां दशाम्। केवलस्य तु तस्य रूपं विदितमेव भवादृशाम्, वि०॥५॥**

व्याख्या—इतरपुद्गलमिलितं काञ्चनं कां दशां अञ्चति पश्य इतरे काञ्चनभिन्नताम्रादिरूपाः पुद्गला अनन्ताणुकमयद्रव्यादेशास्ते मिलिता मिश्रीभूता यस्मिन् तदितरपुद्गलमिलितं काञ्चनं स्वर्णं कामवचनीयां दशां हीनस्वरूपावस्थां अञ्चति प्राप्नोतीति पश्य विलोकय । तथैव सहजानन्दज्ञानस्वरूपमयं चिद्रूपं काञ्चनं एकत्वज्ञानविरहितं ममतादिपरभावमिलितं दुर्गत्यादिहीनतां प्राप्नोति, नान्यथा । केवलस्य तस्य रूपं तु भवादृशां विदितमेव केवलस्य परसंयोगवर्जितस्य तस्य रूपं काञ्चनस्य रूपं न पुनस्तस्य सर्वसंयोगविमुक्तस्यात्मनः स्वरूपं भवादृशां भवत्तुल्यमाज्ञानां विदितमेव सप्रकाशमार्दवगुरुस्निग्धमंगलादिमयं ज्ञातमेव वर्ततेऽतो नोच्यत इत्यर्थः ॥ ५ ॥

अथ ग्रन्थकार उपनयरूपेण स्पष्टयन्नाह—

**एवमात्मनि कर्मवशतो भवति रूपमनेकधा। कर्ममलरहिते तु भगवति भासते काञ्चनविधा, वि० ॥६॥**

व्याख्या—एवमात्मनि कर्मवशतोऽनेकधा रूपं भवति एवममुनाऽन्यधातुमिश्रितकाञ्चनानेकरूपतान्यायेन आत्मनि

चेतनविषये कर्मवशतः सदा सर्वत्रैकरूपाकारेऽपि सति शुभाशुभकर्मोदयवशादेव अनेकधा सूक्ष्मबादरसुखिदुःखिविघ्-
न्मूर्त्यादिविचित्रप्रकारं रूपमाकारो भवति जायते न तु स्वभावेनेति जानीहि । तु पुनः कर्ममलरहिते भगवति काञ्चन-
विधा भासते कर्ममलरहिते शुभाशुभसकलकर्मसंबन्धान्निर्मुक्ते भगवति सिद्धपरमात्मनि काञ्चनविधा शुद्धैकप्रकाशान-
न्दरूपता भासते पूर्णब्रह्मसंपन्निर्दीप्यतेऽत एकैकत्वं भावनीयमित्यर्थः ॥ ६ ॥

ग्रन्थकारः स्वयं प्रार्थनां कुर्वन्नाह—

**ज्ञानदर्शनचरणपर्यवपरिवृतः परमेश्वरः । एक एवानुभवसदने स रमतामविनश्वरः, वि० ॥ ७ ॥**

व्याख्या—सोऽविनश्वरः परमेश्वरो ज्ञानदर्शनचरणपर्यवपरिवृत एक एवानुभवसदने रमतां, सोऽनन्तरोक्तस्वरूपः । कीदृशः ? अविनश्वरोऽविनशनशीलः परमेश्वरः परमश्चासावीश्वरश्चेति सर्वेषामितरपूजनीयानां पूज्यध्येयस्मरणीयसक-लेष्टसाधकप्रभावमयभक्तिस्वभावत्वादिति भावः । ज्ञानदर्शनचरणपर्यायपरिवृतः ज्ञानं विश्वविश्ववस्तुराशिसर्वभेदावभा-सिविशेषबोधो दर्शनं सर्वपदार्थसार्थध्रौव्यरूपसमस्तभावदर्शिसामान्यबोधः चरणं सकलात्मप्रदेशानां सर्वकालाचलनि-श्चलत्वरूपस्थैर्यवृत्तिः, द्वन्द्वे कृते तेषां ये पर्यायाः समयादिभेदेनोपयोगादिवर्तनप्रकाराः स्वस्वशक्तेरंशा अतीतद्यास्थि-कप्रकाराश्च तैः परिवृतो व्याप्तः समग्रश्च एक एव अन्यं विहाय स एव । मेऽनुभवसदने ज्ञानस्वभावभवने बोधलक्ष्य-इति यावत् । रमतां सदैव रममाणो दृश्यमानोऽस्त्वित्यर्थः ॥ ७ ॥

अथोपसंहरति—

रुचिरसमतामृतरसं क्षणमुदितमास्वादय मुदा ।
विनय विषयातीतसुखरसरतिरुदञ्चतु ते सदा, वि० ॥ ८ ॥

॥ इति श्रीशान्तसुधारसगेयकाव्ये एकत्वभावनाविभावनो नाम चतुर्थः प्रकाशः ॥

व्याख्या—हे विनय हे सद्गुणनिर्वृतिरुचे रुचिरसमतामृतरसं उदितं मुदा क्षणमास्वादय यो रुचिरो मधुरो मनोहरः सन् सदा प्रीतिसंपादकः समता मोक्षरूपा सैवामृतं सर्वकर्मरोगहरसुधा तद्रूपो रस आत्मरतिस्वादिष्ठता तं, रुचिरश्चासौ समतामृतरसश्चेति समासः । उदितमुक्तमचिन्तितमेवाविर्भूतमिति यावत् तं। मुदाऽपूर्वलाभेन हर्षितो भूत्वा क्षणं स्वल्पकालमपि । आस्वादय आ ईषदीषदपि लिहस्व । तेनास्वादनेन ते तवात्मनः सदा सततं विषयातीतसुखरसरतिरुदञ्चतु विषयेभ्योऽतिक्रान्तं यत्सुखमानन्दस्तस्य यो रसः स्वादस्तस्मिन् या रतिः प्रीतिः सा उदञ्चतु वृद्धिं गच्छत्वित्यर्थः ॥ ८ ॥

इति श्रीतपागच्छीयसंविग्नशाखीयपरममुनिश्रीवृद्धिविजयमुख्यशिष्यश्रीमुक्तिविजयगणिसतीर्थ्यतिलकमुनिश्रीवृद्धिविजयचरणयुगसेविना पंडितगंभीरविजयगणिना विरचितायां शान्तसुधारसटीकायामेकत्वभावनाविभावनो नाम चतुर्थः प्रकाशः समजनि ॥

## ॥ पञ्चमः प्रकाशः ॥

चतुर्थप्रकाश एकत्वभावना भाविता । स्वस्यैकत्वे च ज्ञाते सति सर्वस्मिन् परपदार्थेऽन्यत्वज्ञानं जायतेऽतः पञ्चमप्रकाशेऽन्यत्वभावनां विभावयतीत्यनेन संबन्धेनायातस्यास्यायं प्रथमः श्लोकः—

( उपजातिवृत्तम् )

परः प्रविष्टः कुरुते विनाशं लोकोक्तिरेषा न मृषेति मन्ये ।
निर्विश्य कर्माणुभिरस्य किं किं ज्ञानात्मनो नो समपादि कष्टम् ॥ १ ॥

व्याख्या—परः स्वस्मादन्यः स्वरूपेण जात्या च भिन्न इति यावत् । प्रविष्टः स्वशरीरगृहादिषु लब्धप्रवेशः । विनाशं शरीरधनधान्यादिसंहरणाद्युपद्रवमेव कुरुते । एषाऽनन्तरदर्शिता लोकोक्तिः साधारणजनवचनोल्लापोऽपि न मृषाऽसत्या नास्तीति अहं मन्ये मद्बुद्धयो जनो निश्चिनोति, तर्हि सर्वज्ञोक्तयो न कथञ्चनाप्यन्यथेत्यतो निर्धारयामि कर्माणुभिर्निर्विश्यास्य ज्ञानात्मनः किं किं कष्टं नो समपादि कर्माणुभिः कर्मणो ज्ञानावरणीयादेरणवोऽनन्तपरमाणुनिष्पन्नाः स्कन्धास्तैः निर्विश्य नितरां सर्वात्मप्रदेशेषु प्रवेशं कृत्वाऽस्य स्वानुभवप्रत्यक्षस्य ज्ञानिनः स्वसुखदुःखादिज्ञातुर्ज्ञानस्वरूपस्य वात्मनो मम चेतनस्य सर्वसंसारिजीवस्य च किं किं कतमं कतमं कष्टं दुःखं नो समपादि नो प्रापितं, यन्न प्रापितं तत्कष्टमपि नास्ति लोकेऽतः परस्मादविस्पृष्टो भवेत्यर्थः ॥ १ ॥

अथ परस्मिन्नन्यत्वानवबोधात्स्वं विस्मृत्य परार्थे खिद्यते इत्युपदिशति—

( स्वागतावृत्तम् )

खिद्यसे ननु किमन्यकथार्तः सर्वदैव ममतापरतंत्रः ।
चिन्तयस्यनुपमान्कथमात्मन्नात्मनो गुणमणीन्न कदापि ॥ २ ॥

व्याख्या—हे आत्मन् त्वं ममतापरतंत्रः सर्वदैवान्यकथार्तः ननु किं खिद्यसे ? ममता पूर्वोक्ता तज्जन्या या परतन्त्रता अहमेषां पालक एते मे पाल्या अयं मे प्रभुरित्यादिरूपा पराधीनता तया परतंत्रः परवशः सन् । सर्वदैव सर्वकालमहर्निशं । अन्यकथार्तः अन्येषां स्वात्मभिन्नानां कथा तद्भोजनादिसंपादनचिन्ता तयार्तः पीडितः । नन्विति मुग्धसंबोधने । रे अज्ञ स्वयमेव स्वस्य पारवश्यमुत्पाद्य कष्टापतनावसरे किं खिद्यसे कस्मात् त्वं खेदयसि स्वकृतपारवश्यं मुंदय । तथाऽन्यस्याज्ञः सन् अनुपमान् आत्मनो गुणमणीन् कथं कदापि न चिन्तयसि ? अनुपमान् सर्वेष्टसंपादकत्वेन चिन्तामणिकामघटकल्पवृक्षादिसर्वोपमातीतान् आत्मनो जीवस्य ये गुणा अनन्तज्ञानदर्शनमयसर्वसंबन्धरहितनैरअन्यसत्तादिस्वस्वभावास्त एव सर्वोत्तमत्वेन मणयो रत्नानि तान् कथं कस्मात्प्रमादादिदोषात् कदापि सावकाशशयनभोजनाद्यवसरेऽपि न चिन्तयसि एतेऽन्ये अहमन्योऽस्मीति हृदि निधाय तान्न ध्यायसीति न जाने का तवेच्छा वर्तत इत्यर्थः ॥ २ ॥

अथ विशेषेणान्यत्वं भावयति—

( शार्दूलविक्रीडितं वृत्तद्वयम् )

यस्मै त्वं यतसे बिभेषि च यतो यत्रानिशं मोदसे यद्यच्छोचसि यद्यदिच्छसि हृदा यत्प्राप्य पेप्रीयसे ।
स्निग्धो येषु निजस्वभावममलं निर्लोठ्य लालप्यसे तत्सर्वं परकीयमेव भगवन्नात्मन्न किञ्चित्तव ॥ ३ ॥

व्याख्या—हे आत्मन् हृदा चेतसा विलोकय । किमित्याह—हृदेति सर्वत्र संबन्धनीयं, यस्मै धनकुटुंबशरीरादिकृते त्वं देवदत्तादिः हृदाकूतेन सहितः यतसे प्रकटप्रौढोद्यमपरो वर्तसे । च पुनः । यतः शत्रुसिंहसर्पचौरादिभ्यः शरीरधनादिनाशात् बिभेषि भयवान् भवसि तच्छरीरादि । तथा यत्र स्त्रीधनपुत्रादिके अनिशं सदा निरन्तरं मोदसे सानन्दोऽसि तत् । तथा यत् पुरानष्टस्वजनधनादि शोचसि संतप्तचित्तः पश्चात्तापपरो भवसि । तथा यत् इच्छसि सुखपुत्रादिकं । यत्प्राप्य हृदा पेप्रीयसे यद्राज्यपूजासत्कारादिकं प्राप्य लब्ध्वा हृदा मनसा पेप्रीयसेऽतिशयेन प्रेमवशो भवसि । येषु वस्त्रालंकारसदनोत्सवखाद्यादिषु प्राप्तेषु इष्टेषु सत्सु स्निग्धः प्रेमरागरञ्जितो भूत्वा अमलं स्वच्छमणिवन्निर्मलं निजस्वभावं सहजां परिणतिं निर्लोठ्य नितरामुन्मथ्य परित्यज्येति यावत् । लालप्यसे यथा तथा यद्वा तद्वा प्रलापान् करोषि । भगवन्नात्मन् हे भगवन् ज्ञानवैराग्यादिमन्नात्मन् तत्सर्वं तत्पूर्वोक्तं सर्वं निःशेषं समग्रं परकीयमेव परमाण्वादिपुद्गलसंबन्ध्येव तज्जन्यत्वात् यद्वाऽन्यत्वात् तव चेतनस्य तेभ्योऽन्यस्य न किञ्चित् परमाणुमात्रमपि तव नास्तीति निर्वृतो भवेत्यर्थः ॥ ३ ॥

दुष्टाः कष्टकदर्थनाः कति न ताः सोढास्त्वया संसृतौ तिर्यङ्नारकयोनिषु प्रतिहतश्छिन्नो विभिन्नो मुहुः ।
सर्वं तत्परकीयदुर्विलसितं विस्मृत्य तेष्वेव हा रज्यन्मुह्यसि मूढतानुपचरन्नात्मन्न किं लज्जसे ॥ ४ ॥

व्याख्या-हे आत्मन् त्वया संसृतौ ता दुष्टाः कष्टकदर्थनाः कति न सोढाः त्वयाऽन्येषु स्वकीयत्वबुद्धिभृता संसृतौ चतुर्गतिके भवभ्रमणे ता अनन्तसंख्येयत्वेन वक्तुमशक्याः दुष्टाः केवलदुःखरूपा दुःखफला दुःखानुबन्धिन्यः कष्टकदर्थनाः यातनामयमहाविडंबनाः पीडा इति यावत् । कति कियन्त्यो न सोढाः कष्टभोगत्वेन प्राप्तोऽसि भिन्नेषु निजत्वबुद्ध्या सर्वाः प्राप्ताः । या न प्राप्ता सा नास्तीति यावत् । भूयः शृणु—यत्तिर्यङ्नारकयोनिषु मुहुः प्रतिहतश्छिन्नो भिन्नस्तत्सर्वं परकीयदुर्विलसितं विस्मृत्य हा तेष्वेव रज्यन्मुह्यसि, मूढतामुपचरन् किं न लज्जसे यत्त्वमात्मन् तिर्यङ् एकद्वित्रिचतुःपञ्चेन्द्रिया अपदद्विपदचतुष्पदजलस्थलखेचरसंमूर्छिमगर्भजादिभेदभिन्नास्तिर्यञ्चो नारका रत्नप्रभादिप्रजनाः सप्तधा तेषां योनयः उत्पत्तिस्थानानि तेषु मुहुः पौनःपुन्येनानन्तशः प्रतिहतो भूयो भूयो मुद्गरादिना प्रहतः छिन्नः खड्गादिना खण्डशः कृतः भिन्नः तोमरादिना हृदयोत्तमांगादिषु विद्धः तत्सर्वं तत्पूर्वोक्तं सर्वं दुःखं त्वयाऽनुभूतं यद्धेतुकं तज्जानीहि । किं तदित्याह—परकीयदुर्विलसितं परे आत्मनो भिन्नाः कर्मपुद्गलशरीरधनभार्यादयस्तेषामिदं विलसितं क्रियाफलं वर्तते तद्विस्मृत्य स्मरणमकृत्वा हा महाकष्टं तेष्वेव परविलसितेष्वेव रज्यन् आसक्तिं दधत् मुह्यसि मोहं प्राप्नोषि । रे मूढ रे अज्ञ तानुपचरन् परविलासान् भजन् किं कस्माद्धेतोर्न लज्जसे अज्ञानमोहवशाद्गतलज्जोऽसीत्यर्थः ॥ ४ ॥

( अनुष्टुब् वृत्तम् )

ज्ञानदर्शनचारित्रकेतनां चेतनां विना । सर्वमन्यद्विनिश्चित्य यतस्व स्वहिताप्तये ॥ ५ ॥

व्याख्या—हे चेतन त्वं ज्ञानदर्शनचारित्रकेतनां ज्ञानं भेदग्राहिबोधो, दर्शनं निर्भेदग्राहिबोधः, चारित्रं परस्मान्निवृत्तिस्वभावः, द्वन्द्वे कृते तानि केतनं चिह्नं स्वरूपं यस्याः सा तथा तामुक्तरूपां चेतनां त्रिगुणमयजीवसत्तां विना विहाय । सर्वं निःशेषवस्तुजातं । अन्यत् मत्तो जातिस्वरूपगुणस्वत्वादिभिर्भिन्नमेव वर्तते । विनिश्चित्य विविधप्रकारेण निर्धार्य । स्वहिताप्तये मोक्षप्राप्तिकृते । यतस्व सोद्यमो भवेत्यर्थः ॥ ५ ॥

अथ गेयपद्याष्टकेनान्यत्वं विभावयति—

विनय निभालय निजभवनं(र) तनुधनसुतसदनस्वजनादिषु, किं निजमिह कुगतेरवनम्, वि० ॥१॥

व्याख्या—हे विनय हे निःसंगचेतन निजभवनं निभालय निजमन्यत्सर्वं परकीयं हित्वा यदात्मीयं भवनं स्वसत्तामनादितः स्वजन्मादिवर्तनां स्वाधारं च निभालय नितरामन्तर्दृशा विलोकय किमत्रात्मीयमन्यदीयं स्थायि गत्वरं चेति पश्य । तथा इह तनुधनसुतसदनस्वजनादिषु निजं कुगतेरवनं किं इह संसारे शरीरसंपत्पुत्रगृहस्वपरिवारेषु मध्ये निजं कुगतेरवनं आत्मनो दुर्गतितो रक्षणं किमस्तीति पश्येत्यर्थः ॥ १ ॥

येन सहाश्रयसेऽतिविमोहादिदमहमित्यविभेदम् ।
तदपि शरीरं नियतमधीरं त्यजति भवन्तं धृतखेदम्, वि० ॥ २ ॥

व्याख्या—हे चेतन त्वं येन सह अतिविमोहादिदमहमित्यविच्छेदमाश्रयसे येन तवातिप्रियेण शरीरेण सह सार्धं अतिविमोहात् अतिशयेनान्येभ्यः सर्वप्रियेभ्यः समाधिक्येन यो मोहोऽज्ञानं रागश्च तस्मात् इदं प्रत्यक्षदृश्यमानं च शरीरं निर्दिशति अहं इदमहं देवदत्तादिरस्मि इत्येवंप्रकारेण अविच्छेदं अविच्छिन्नत्वेनैकत्वं आश्रयसे मन्यसे। तदपि शरीरं मोक्षधर्माधारदेहोऽपि, आस्तामितरे धनादिपदार्थाः। नियतमधीरं नियतमवश्यं निश्चितमिति यावत् अधीरं शरीरं धृतखेदं भवन्तं त्यजति धृतः प्रापितः खेदः शोकः शक्तिशैथिल्यं चेति यावत् येन तं तादृशं। भवन्तं त्वां त्यजति त्यजत्येवास्तीत्यर्थः॥ २॥

जन्मनि जन्मनि विविधपरिग्रहमुपचिनुषे च कुटुंबम्।
तेषु भवन्तं परभवगमने नानुसरति कृशमपि सुखम्, वि०॥ ३॥

व्याख्या—हे प्राणिन् त्वं जन्मनि जन्मनि अनादितो भवे। विविधपरिग्रहं कुटुंबं चोपचिनुषे विविधो नानाजातीयपदार्थसंग्रहरूपः परिग्रहः तस्य स्वकीयत्वेन स्वीकारस्तं च पुनः कुटुंबं भार्यापुत्रादिपरिवारस्तत् च उपचिनुषे नवं नवं समुत्पाद्य वृद्धिं पोषणं च कुरुषे। न च निजत्वग्रहग्रस्तस्वात्मानं कदापि चिन्तयसि। परभवगमने तेषु कृशमपि सुखं भवन्तं नानुसरति। परंतु रे जीव परभवगमने जन्मान्तरप्रापणावसरे। तेषु परिग्रहकुटुंबवृन्देषु मध्यगेषु कृशमपि सूक्ष्मात्सूक्ष्ममपि सुखं लवमात्रमपि भवन्तमात्मानं नानुसरसि न सहायायितया समागमिष्यसि, तस्माद्व्यर्थस्तत्र प्रतिबन्ध इत्यर्थः॥ ३॥ ...

त्यज ममतापरितापनिदानं परपरिचयपरिणामम् ।
भज निःसंगतया विशदीकृतमनुभवसुखरसमभिरामम्, वि० ॥ ४ ॥

व्याख्या–ममतापरितापनिदानं ममता ममत्वभावः परि सर्वात्मप्रदेशेषु तापो वियोगवेदनादिजन्यसंतापो दुर्गत्यादि-कष्टविशेषश्च परितापस्तयोः निदानं मुख्यहेतुर्यस्तं । परपरिचयपरिणामं परे स्वस्मादन्ये तेषां तेषु वा परिचयः संबन्धः स्नेहश्च तेन तद्रूपो वा यः परिणामः स्वभावस्यान्यथाभावो विकारो वा तं त्यज स्वभावस्थभवनेन परिहर । निःसंग-तया विशदीकृतमभिराममनुभवसुखरसं भज न विद्यते संगः परवस्तुसंसर्गो यस्यासौ निःसंगस्तस्य भावो निःसंगता सर्वपरित्यागजा केवलात्मरूपता तया विशदीकृतं सर्वमलपरिहारेण निर्मलीकृतं निरावरणमिति यावत् अभिरामं सर्वदा सर्वप्रकारेण यो मनोहरः सन्मधुरो हृदयंगमस्तं अनुभवसुखरसं अनुभवनमात्मस्वरूपादिसर्वस्य प्रत्यक्षकरणमनुभवः परि-पूर्णज्ञानविलासस्तस्य तेन कृतं तद्रूपं वा यत्सुखं सहजानन्दस्तद्रूपो रसो रतिः प्रेमा तं भज सेवस्वेत्यर्थः ॥ ४ ॥

परेषां स्वस्य च यानमार्गोऽपि नैकोऽस्तीति दर्शयति—

पथि पथि विविधपथैः पथिकैः सह कुरुते कः प्रतिबन्धम् ।
निजनिजकर्मवशैः स्वजनैः सह किं कुरुषे ममताबन्धम्, वि० ॥ ५ ॥

व्याख्या–विविधपथैः पथिकैः सह पथि पथि कः प्रतिबन्धं कुरुते विविधा गम्यमानदिगभिप्रायस्थानादिभेदेनाने-

न्नप्रकारं प्राप्ता ये पथा मार्गास्तैः पथिकैः पन्थानं गच्छन्तीति पथिका मार्गे गन्तारस्तैः सह सार्धं पथि पथि भिन्ने भिन्ने-ऽध्वनि कः कस्को नैपुण्यवान् प्रतिबन्धं सहचारित्वं कुरुते विदधाति ? । भिन्नमार्गगामिभिः सर्वैः सह सार्थगामित्वस्याशक्यत्वान्न कोऽपि कुरुत इति दृष्टान्तः । अथ दार्ष्टान्तिकमाह—निजनिजकर्मवशैः स्वजनैः सह ममतावन्धं किं कुरुषे? तत्रैव निजं निजं आत्मीयमात्मीयं यत्कर्म शुभाशुभकृत्यं पुण्यपापबन्धनिष्पादककरणीयमिति यावत् । तेन वशा वशीकृताः स्वकर्तव्यानुरूपगतिगमने नियंत्रिता इति यावत्तैः । स्वजनैः सह स्वकीयत्वेन स्वीकृता जनाः स्वजना मातृपितृभार्यादयस्तैः सह सार्थवर्तित्वं । किमिति प्रश्ने । किं कुरुषे कर्तुं शक्नोषि ? न कथमपि कर्तुं शक्नोषि । तर्हि तैः सह ममताबन्धं एते मदीया इति बुद्धिं किं कस्मात् कुरुषे ? मा कुर्वित्यर्थः ॥ ५ ॥

अथ पौद्गलिकेषु प्रेमबन्धपरिहाराय समुपदिशति—

प्रणयविहीने दधदभिषंगं सहते बहुसंतापम् ।
त्वयि निःप्रणये पुद्गलनिचये वहसि मुधा ममतातापम्, वि० ॥ ६ ॥

व्याख्या—योऽज्ञः प्रणयविहीनेऽभिष्वंगं दधत् स बहुसंतापं सहते प्रणयः स्नेहः प्रीतिरिति यावत् तेन विहीने विशेषेण रहिते स्त्र्यादिजने अभिष्वंगं भोगाद्यभिलापं दधत् कुर्वन् जनः बहुसंतापं बहुरतिप्रचुरः प्राणघातादिविधायी चंकेशादिवत् संतापः कष्टराशिस्तं सहते भुंक्ते । तथा त्वमपि त्वयि निःप्रणये पुद्गलनिचये ममतातापं मुधा वहसि त्वयि त्वद्विषये तवोपरीति यावत् निःप्रणये निषिद्धः शून्यतां प्राप्तः प्रणयः प्रेमा यस्मात्स तथा तस्मिन् । पुद्गलनिचये पुद्ग-

स्वार्थ
लानां हेमरत्नदेहशब्दादीनां निचयो राशिस्तस्मिन् । ममतातापं मदीयत्वपरिणामेनोत्पादितं तापं कष्टवृन्दं मुधा विनैव वहसि प्राप्नोषीत्यर्थः ॥ ६ ॥

त्यज संयोगं नियतवियोगं कुरु निर्मलमवधानम् ।

न हि विदधानः कथमपि तृप्यसि मृगतृष्णाघनरसपानम्, ॥ वि० ॥ ७ ॥

व्याख्या–हे आत्मन् नियतवियोगं संयोगं त्यज नियतो निश्चितो यस्य वियोगो विनाशो भवति स नियतवियोगस्तं संयोगं अमिलितयोर्मीलनं संयोगः संबन्धस्तं त्यज परिहर । निर्मलं पराशंसादिदोषमलरहितमीदृशमवधानं विनिवृत्तत्वेन निर्विकारमनोभावैकाग्र्यं कुरु रचय । अन्यथा त्वं सांसारिकैः सुखैः मृगतृष्णाघनरसपानं विदधानोऽपि कथं तृप्यसि निदाघकाले मध्याह्नेऽजले दृश्यमानो जलभ्रमो मृगतृष्णा तस्यां घनं प्रचुरं रसपानं पयःपानं विदधानोऽपि कुर्वाणोऽपि कथ केनोपायेन कियता कालेन तृप्यसि वितृष्णो भवसीत्यर्थः ॥ ७ ॥

अन्यत्वभावनामुपसंहरन्नाह—

भज जिनपतिमसहायसहायं शिवगतिसुगमोपायम् ।

पिब गदशमनं परिहृतवमनं शान्तसुधारसमनपायम्, वि० ॥ ८ ॥

॥ इति श्रीशान्तसुधारसगेयकाव्येऽन्यत्वभावनाविभावनो नाम पञ्चमः प्रकाशः ॥

व्याख्या-हे आत्मन् असहायसहायं जिनपतिं भज असहायाः स्वामिधनकुटुंबपुण्योदयाद्याश्रयरहितास्तेषामपि सहायः सद्धर्मप्रापणेन स्वर्गमोक्षादिसत्कृतिविश्रामदस्तं जिनपतिं जिनेश्वरं भज भक्तिं सेवां कुरु। तमेव शिवगतिसुगमोपायं शिवो मोक्षः स एव गतिः गम्यमानत्वाद्विश्रान्तिस्तस्याः सुगमोऽनायासेन साधक उपायः फलप्राप्तेः साधनरूपं तं। अनपायं परिहृतवमनं गदशमनं शान्तसुधारसं पिब, अनपायं विनाशवर्जितं, परिहृतं दूरीकृतं वमनं विकाररूपा वान्तिर्येन तं गदाः सर्वे द्रव्यजान्तर्भेदभिन्ना रोगास्तेषां शमनं महौषधं प्रोक्तप्रभावं शान्तसुधारसं पिब समास्वादयेत्यर्थः ॥ ८ ॥

॥ इति श्रीतपागच्छीयसंविग्नशाखीयपरममुनिश्रीबुद्धिविजयमुख्यशिष्यश्रीमु-
क्तिविजयगणिसतीर्थ्यतिलकमुनिश्रीवृद्धिविजयचरणयुगसेविना पंन्यासगं-
भीरविजयगणिना विरचितायां श्रीशान्तसुधारसटीकायामन्यत्वभा-
वनाविभावनो नाम पञ्चमः प्रकाशः समजनि ॥

---

## ॥ अथ षष्ठः प्रकाशः ॥

पञ्चमप्रकाशेऽन्यत्वभावना प्रोक्ता । तया भावितात्मा शरीरादिषु निर्ममत्वेनाशुचित्वं वेत्तीत्यनेन संबन्धेनायातामशुचिभावनामाह । तस्या अयमादिमः श्लोकः—

( शार्दूलविक्रीडितं वृत्तम् )

**सच्छिद्रो मदिराघटः परिगलत्तल्लेशसंगाशुचिः शुच्यामृद्य मृदा बहिः स बहुशो धौतोपि गंगोदकैः ।**
**नाधत्ते शुचितां यथा तनुभृतां कायो निकायो महाबीभत्सास्थिपुरीषमूत्ररजसां नायं तथा शुद्ध्यति॥१॥**

व्याख्या–यथा सच्छिद्रो मदिराघटः परिगलत्तल्लेशसंगाशुचिः स बहिः शुच्या मृदा आमृद्य गंगोदकैः बहुशो धौतोऽपि शुचितां नाधत्ते, तथाऽयं महाबीभत्सास्थिपुरीषमूत्ररजसां निकायस्तनुभृतां कायो न शुध्यति । भो भव्य यथा येन प्रकारेण छिद्रैर्लघुरन्ध्रैः सह वर्तत इति सच्छिद्रः परितः सूक्ष्मैस्तैर्युक्तः इति यावत् । मदिराघटः मदिरा सुरा तया भृतो घटः कुंभ इति मध्यमपदलोपी समासः । परिगलत्तल्लेशसंगाशुचिः परि दिग्विदिग्भ्यः सर्वतो गलन्तः स्रवन्तस्तल्लेशा मदिरावयवा बिन्दव इति यावत् तेषां संगो लेपारूढसंयोगः तस्मादशुचिरपवित्रः । स ईदृशो मदिराघटो बहिः कपालाधोभागग्रीवादिप्रदेशेषु । शुच्या मृदा आमृद्य शुचिः सुगन्धसुवर्णसुरसवती पवित्रा तया मृदा मृत्तिकया आमृद्य पुनः पुनर्मर्दयित्वा । गंगोदकैर्विमलगंगाजलैः । बहुशो भूयो भूयोऽनेकवारं । धौतोऽपि प्रक्षालितोऽपि । शुचितां पावित्र्यं ।

नाधत्ते न धारयति । तथा तेनैव प्रकारेण । अयं साक्षाद्दृश्यमानः । महाबीभत्सास्थिपुरीषमूत्ररजसां निकायः महती बीभत्सा जुगुप्सा येषां दर्शनादिषु ते महाबीभत्सा दुर्गर्हणीया इति यावत् अस्थीनि कीकसाः पुरीषं विष्ठा मूत्रं प्रस्रवणं रजो रुधिरं वीर्यं च तेषामस्थिपुरीषमूत्ररजसां निकायो राशिरशुचिपुञ्ज इति यावत् । तनुभृतां प्राणिनां कायो देहः कृते पूर्वोक्तप्रयत्नेऽपि न शुध्यति शुचिर्न भवतीत्यर्थः ॥ १ ॥

भूयोऽपि शरीरं शुचीकर्तुमशक्यमेवेत्युपदिशति—

( मन्दाक्रान्तावृत्तम् )

स्नायं स्नायं पुनरपि पुनः स्नान्ति शुद्धाभिरद्भिर्वारंवारं बत मलतनुं चन्दनैरर्चयन्ते ।
मूढात्मानो वयमपमलाः प्रीतिमित्याश्रयन्ते नो शुध्यन्ते कथमवकरः शक्यते शोद्धुमेवम् ॥ २ ॥

व्याख्या–मूढात्मानः शरीरपावित्र्यकृते मोहिता मूर्खशिरोमणयः । स्नायं स्नायं स्नात्वा स्नात्वा । शुद्धाभिरद्भिः शुद्धाभिर्निर्मलैः अद्भिर्जलैः कृत्वा । पुनरपि पुनः पूर्वं कृतस्नाना अपि भूयोऽपि भूयः स्नान्ति मज्जनं कुर्वन्ति । मलतनुं तथा मलस्य विष्ठायाः पुञ्जभूतं तनुं देहं । बतेति खेदे हा कष्टं । वारंवारं प्रतिवासरं अनेकशः । चन्दनैः सुगन्धिश्रीखण्डद्रवैः । अर्चयन्ते विलेपनपूजां विधीयन्ते । तथाकरणेन च अपमला वयमिति प्रीतिमाश्रयन्ते अपमला नष्टमला • वयं पवित्राः स्म इति इत्येवंविधां प्रीतिं प्रेमविशेषं आश्रयन्ते भजन्ते । तथापि नो शुध्यन्ते पवित्रा नो जायन्ते बहिरन्तर्मलपूरितत्वात् । अवकरः संकरः एवमुक्तप्रकारेण भूतः कथं केनोपायेन शोद्धुं शुचित्वमाधातुं शक्यते ? न कथमपीत्यर्थः॥२॥

अथ दृष्टान्तपूर्वकं शरीरे शुचित्वं कृतज्ञत्वं च संप्रापयितुमशक्यमिति भावयन्नाह—

( शार्दूलविक्रीडितं वृत्तम् )

कर्पूरादिभिरर्चितोऽपि लशुनो नो गाहते सौरभं,
नाजन्मोपकृतोऽपि हन्त पिशुनः सौजन्यमालंबते।
देहोऽप्येष तथा जहाति न नृणां स्वाभाविकीं विस्रतां,
नाभ्यक्तोऽपि विभूषितोऽपि बहुधा पुष्टोऽपि विश्वस्यते ॥ ३ ॥

व्याख्या—हन्तेति कोमलामंत्रणे हे मन्दमतिचेतन यथा लशुनः कर्पूरादिभिरर्चितोऽपि सौरभं नो गाहते लशुनो दुर्गन्धिकन्दविशेषो लोकप्रसिद्धः । ॥ कर्पूरादिभिः कर्पूरो घनसार आदिपदादंबरागरकुंकुममृगमदादयो ग्राह्याः तैरर्चितोऽपि वासितोऽपि । सौरभं सुगन्धिभावं नो नैव गाहते व्याप्तो भवति । यथा च आजन्मोपकृतोऽपि पिशुनः सौजन्यं नालंबते आजन्म जन्मदिनादारभ्य मरणावसानं यावदुपकृतोऽपि भोजनाच्छादनविद्याद्रविणदानादिना पालितोऽपि पिशुनो दुर्जनः खलपुरुष इति यावत् । सौजन्यं स्वहृदयगतयथार्थसद्भावप्रकाशक आर्जववान् जनः सुजनस्तद्भावः कर्तव्यता वा सौजन्यं सर्वत्र सन्मैत्री तन्नालंबते हृदयगूढतापरिहारपूर्वकं न स्वीकुरुते । तथा नृणां मनुष्याणां । एष प्रत्यक्षं दृश्यमानः । देहोऽपि शरीरमपि । स्वाभाविकीं सहजामकृत्रिमां । विस्रतां आमगन्धितां दुर्गन्धितामिति यावत् । न

जहाति न त्यजति । तथाऽन्यकोऽपि नानाजातीयसुगन्धिभिर्विलिप्तोऽपि विभूषितोऽपि विविधवस्त्राभरणैः शृंगारितोऽपि बहुधा पुष्टोऽपि बहुधाऽतिशयेन पुष्टः सरसभोजनादिभिरुपचितवलर्पिकोऽपि पूर्वोक्तसर्वप्रकारेणोपचरितोऽपीदमसदीयमेव स्थास्यति चेति । न विश्वस्यते न विश्वासे स्थीयत इत्यर्थः ॥ ३ ॥

शरीरे शुचित्वबुद्धिर्महाऽज्ञानमित्याह—

( उपेन्द्रवज्रावृत्तम् )

यदीयसंसर्गमवाप्य सद्यो भवेच्छुचीनामशुचित्वमुच्चैः ।
अमेध्ययोनेर्वपुषोऽस्य शौचसंकल्पमोहोऽयमहो महीयान् ॥ ४ ॥

व्याख्या—अहो महदाश्चर्यं यदज्ञानां यदीयसंसर्गमवाप्य शुचीनां सद्य उच्चैरशुचित्वं भवेत् यदीयं यस्य शरीरस्य संबन्धिनं संसर्गं संस्पर्शादिकं अवाप्य प्राप्य शुचीनां पवित्रदुग्धदधिघृतसितागरुकर्पूरचन्दनाम्बरवस्त्राभरणादीनामपि सद्योऽतिशीघ्रं स्वल्पकालेन उच्चैरतिशयेन अशुचित्वं विवेकिनामस्पर्शनीयत्वानिक्षनीयत्वादर्शनीयत्वादिकं भवेत् कृतपायसभोजनस्य वान्तेरिव जायते । तस्यास्यामेध्ययोनेर्वपुषः शौचसंकल्पोऽयं महीयान्मोहः अस्य दृश्यमानस्य अमेध्ययोनेरमेध्यस्य सर्वथाऽपवित्रस्य विष्ठादेर्योनेरुत्पत्तिस्थानस्य वपुषो देहस्य शौचसंकल्पः स्नानादिनेदं पवित्रं जातमिति मनसा धारणं तदयं तेषां महीयान् घननिबिडप्राचुर्यवान् मोहो मिथ्यात्वोदयजनितोऽज्ञानकामविकारो वर्तते । अतो विवेकिभिरयं भ्रमः परिहर्तव्योऽस्तीत्यर्थः ॥ ४ ॥

अतो धर्मशौचं करणीयमित्याह—

( स्वागतावृत्तम् )

**इत्यवेत्य शुचिवादमतथ्यं पथ्यमेव जगदेकपवित्रम्।शोधनं सकलदोषमलानां धर्ममेव हृदये निदधीथाः॥८**

व्याख्या—इति शुचिवादमतथ्यमवेत्य पथ्यमेव जगदेकपवित्रं सकलदोषमलानां शोधनं धर्ममेव हृदये निदधीथाः, इति पूर्वोक्तप्रकारेण शुचिवादं जलादिना पवित्रता भवतीत्युपदेशवचनं अतथ्यं तथ्यं यथार्थं न भवतीत्यतथ्यमसत्यं अवेत्य ज्ञात्वा पथ्यमेव सर्वस्य सर्वथा हितमेवारोग्यहेतुत्वात् । जगति विश्वे एकपवित्रं एकमेव शुद्धं नान्यत् सकलदोषमलानां सकला रागद्वेषमोहादयः समग्रा दोषा आत्मनः दूषका विकृतिकरा इति यावत् त एव मला कर्मलेपमालिन्यजनकास्तेषां शोधनं प्रक्षालनं मूलतः पृथक्कारिणं धर्ममेव ज्ञानदर्शनमयस्वस्वरूपमेव हृदये स्वमनसि निदधीथा नितरां धारयस्वेत्यर्थः॥८॥

अथ गेयपद्याष्टकेनाशुचिभावनां विभावयन्नाह—

**भावय रे वपुरिदमतिमलिनं, विनय विबोधय मानसनलिनम् ।**
**पावनमनुचिन्तय विभुमेकं, परममहोमयमुदितविवेकम्, भा० ॥ १ ॥**

व्याख्या—रे विनय रे चेतन इदं तव प्रत्यक्षवर्तमानं वपुः शरीरं अतिमलिनं मले प्रभवत्वाच्छोद्धुमशक्यत्वाद्बहुमलयुक्तं वर्तते । तदस्यातिमलिनत्वं भावय चिन्तय । तथा मानसनलिनं विबोधय तथा चिन्तयन् मानसं हृदयं तदेव

नलिनं कमलं तद्विबोधय समुद्घाटय । तदुद्घाट्य च विलोक्य यत्तत्समले रुन्द्स्व । पावनं विभुमेकं परममहोमयमुदितविवेकमनुचिन्तय पावनं भाविनीं नैरञ्जनीं सत्तामपेक्ष्य निर्मलं शुद्धमिति यावत्, विभुं ज्ञानस्वरूपेण सर्ववस्तुव्यापनशक्त्याधारं, एकमसंख्येयस्वप्रदेशेष्वेकत्वेन ज्ञायकभावेन परिणतं, परममहोमयं सर्वोत्कृष्टकेवलदर्शनरूपप्रकाशमयभास्वरं, उदितविवेकमाविर्भूतभेदग्राहकज्ञानं स्वात्मानं अनुचिन्तय सर्वविभावं परिहृत्य स्वस्वभावानुरूपं ध्यायस्वेत्यर्थः ॥१॥

दम्पतिरेतोरुधिरविवर्ते किं शुभमिह मलकश्मलगर्ते ।
भृशमपि पिहितः स्रवति विरूपं को बहु मनुतेऽवस्करकूपम्, भा० ॥ २ ॥

व्याख्या–इह दम्पतिरेतोरुधिरविवर्ते मलकश्मलगर्ते किं शुभं इहास्मिंस्तव देहे दम्पतिरेतोरुधिरविवर्ते जाया च पतिश्च दम्पती तयोः क्रमेण स्त्रीपुरुषयोः रेतः पतिता वीर्यपुद्गला रुधिरं मातुः शोणितपुद्गलास्तेषां यो विवर्तोऽन्यान्यपरिणामप्राप्त्या शारीरिकसप्तधातुत्वेनोद्भवस्तस्मिन् । मलकश्मलगर्ते मलो मूत्रपुरीषश्लेष्मकफपित्तस्वेदादिरूपः कश्मलः पापपुञ्जसमूहस्ताभ्यां भृतो गर्तोऽगाधखड्डुस्तस्मिन् । किं शुभं किंप्रेमोत्पादकस्वरूपसुन्दरं चर्मरुधिरादिवस्तु पश्यसि ? नास्ति किञ्चिदपि । भृशं पिहितोऽपि विरूपं स्रवति तथायं देहो भृशं वस्त्रादिभिरत्यर्थं पिहित आच्छादितोऽपि विरूपं तथाकृतेऽपि बीभत्सनीयं दुर्गन्धादिकं स्रवति सर्वतो निर्झरति । अत ईदृगवस्करकूपं को बहु मन्यते विष्टादिमलभृतः कूपोऽवटोऽवस्करकूपस्तं तादृशं देहं । कः कतमो विवेकी बहु मन्यते प्रियं मन्यते ? न कोऽपि । मूढा एव प्रियमन्तार इत्यर्थः ॥ २ ॥

व्रजति सचन्द्रं शुचितांबूलं कर्तुं मुखमारुतमनुकूलम् ।
तिष्ठति सुरभि कियन्तं कालं मुखमसुगन्धि जुगुप्सितलालम्, जा० ॥ ३ ॥

व्याख्या—मुखमारुतमनुकूलं कर्तुं सचन्द्रं शुचितांबूलं व्रजति मुखमारुतं वदनोद्भूतश्वासवायुं, अनुकूलं निसर्गेण सर्वस्य प्रतिकूलदुर्गन्धमयं सन्तं अनुकूलं सौरभ्ययुक्तं कर्तुं विधातुं, सचन्द्रं घनसारसहितं, शुचि सुगन्धरसादिना पवित्रं तांबूलं नागवल्लीदलं व्रजति चर्वणं करोति । असुगन्धि जुगुप्सितलालं मुखं कियन्तं कालं सुरभि तिष्ठति, न विद्यते सुष्ठु गन्धो यस्य तत्, तथा जुगुप्सिता निन्दिता लाला यस्य तत् ईदृशं मुखं वदनं, कियन्तं कालं अर्धघटिकादिमात्रं सुरभि सुगन्धयुक्तं तिष्ठति संवर्तत इत्यर्थः ॥ ३ ॥

असुरभिगन्धवहोऽन्तरचारी आवरितुं शक्यो न विकारी ।
वपुरुपजिघ्रसि वारंवारं हसति बुधस्तव शौचाचारम्, जा० ॥ ४ ॥

व्याख्या—विकारी गृहीतपुद्गलानामन्यथापरिणामेन जातो विकारी । अन्तरचारी शरीराभ्यन्तरे संचरितुं शीलमस्येत्यन्तरचारी मध्यव्यापीति यावत् । असुरभिगन्धवहः दुर्गन्धप्रापकश्वासवायुः । आवरितुं सुगन्धिपदार्थैराच्छादयितुं । न शक्यः साध्यो नास्ति । एवं सत्यपि त्वं तु वारंवारं पुनः पुनः वपुः शरीरं सुगन्धिद्रव्यैर्विलिप्य विलिप्य उपजिघ्रसि समाजिघ्रसि । एतत् तव त्वदीयं शौचाचारं तनुशुचिकरणव्यापारं बुधः पण्डितपुरुषः हसति हास्येनानादरं करोति इत्यर्थः ॥ ४ ॥

द्वादश नव रन्ध्राणि निकामं गलदशुचीनि न यान्ति विरामम् ।
यत्र वपुषि तत्कलयसि पूतं मन्ये तव नूतनमाकूतम्, भा० ॥ ५ ॥

व्याख्या—यत्र वपुषि निकामं गलदशुचीनि द्वादश नव रन्ध्राणि विरामं न यान्ति, तत्पूतं कलयसि, नूतनं तवाकूतं मन्ये, यत्र यस्मिन् वपुषि शरीरे निकामं नितरामत्यर्थं गलदशुचीनि गलन्ति स्रवन्ति अशुचीनि दुर्गन्धवर्णरसस्पर्शवज्जुगुप्सोत्पादकापवित्राणि द्वादश नव रन्ध्राणि क्रमेण स्त्रीपुरुषयोर्द्वादशनवसंख्यानि रन्ध्राणि द्वाराणि विरामं विश्रामं क्षणमप्युपराममिति यावत् न यान्ति न प्राप्नुवन्ति । तत्तादृशं शरीरं त्वं मोहात् पूतं पवित्रं कलयसि जानासीति नूतनं विवेकिजनेऽदृष्टपूर्वं तवाकूतं देवानांप्रियस्याभिप्रायं मन्येऽहमवधारयामीत्यर्थः ॥ ५ ॥

अशितमुपस्करसंस्कृतमन्नं जगति जुगुप्सां जनयति हन्नम् ।
पुंसवनं धैनवमपि लीढं भवति विगर्हितमतिजनमीढम्, भा० ॥ ६ ॥

व्याख्या—हे चेतन शरीरसंसर्गप्राप्तं उपस्करसंस्कृतं अशितं अन्नं हन्नं जगति जुगुप्सां जनयति, उपस्करसंस्कृतं उपस्करो घृतदधिजीरकहरिद्रानानाव्यञ्जनादिरसवती सामग्री तया संस्कृतं पक्वं तादृशं अशितं भुक्तं यदन्नं पायसादिभोजनं तज्जनितं हन्नं पुरीषं जगति समग्रजने जुगुप्सां नासिकानेत्रमनसां ग्लानिं जनयति समुत्पादयति । धैनवमपि पुंसवनं लीढमतिविगर्हितं जनमीढं भवति धैनवमपि गवां संबन्धि अपि पुंसवनं स्वादिष्टपुष्टिकारि क्षीरं लीढं सितादिमि-

श्रितोत्कालितसमास्वादितं तदपि अतिविगर्हितं जनमीढं भवति अतिशयेन निन्दनीयं जनाना मनुष्यादिलोकानां मीढं मूत्रं भवति जायते तच्छरीरं कथं पूतं मन्यसेऽतो मा पूतं मन्यस्वेत्यर्थः ॥ ६ ॥

केवलमलमयपुद्गलनिचये अशुचीकृतशुचिभोजनसिचये ।

वपुषि विचिन्तय परमिह सारं शिवसाधनसामर्थ्यमुदारम्, भा० ॥ ७ ॥

व्याख्या–हे आत्मन् इह केवलमलमयपुद्गलनिचये इह प्रत्यक्षमनुभूयमाने केवलमलमयपुद्गलनिचये केवलं मात्रं मलमया मलमात्रस्वरूपाः पुद्गलाः परमाणुसमुदायास्तेषां निचयो राशिर्यत्र तत्तथा तस्मिन् । अशुचीकृतशुचिभोजनसिचये अशुचीनि अपवित्राणि कृतानि विहितानि शुचीनि स्वरूपसुन्दराणि भोजनानि घृतपूर्णादीनि सिचयाश्चीनांशुकादिप्रवरवसनानि येन तत्तथा तस्मिन् वपुषि शरीरे सारं प्रधानभावं उदारं सर्वेभ्यः श्रेष्ठं शिवसाधनसामर्थ्यं जीवस्य मोक्षसंपादनी शक्तिरेवैकाऽस्तीति चिन्तय पर्यालोचय, नान्यदित्यर्थः ॥ ७ ॥

अथोपसंहरन्नाह—

येन विराजितमिदमतिपुण्यं तच्चिन्तय चेतन नैपुण्यम् ।

विशदागममधिगम्य निपानं विरचय शान्तसुधारसपानम्, भा० ॥ ८ ॥

॥ इति श्रीशान्तसुधारसगेयकाव्येऽशौचभावनाविभावनो नाम षष्ठः प्रकाशः ॥

व्याख्या—हे चेतन हे प्राणिन् येन नैपुण्येन इदमतिपुण्यं विराजितं तन्नैपुण्यं चिन्तय, येन सर्वज्ञोपदिष्टेन सर्वपरभावनिवृत्तिकरणसमर्थेन नैपुण्येन स्वस्वरूपनिष्पादनकुशलत्वेन इदं प्राप्तशरीरं अतिपुण्यं सुरेन्द्राणामप्यतिशयेन महनीयत्वार्थं गतत्वेनातिपवित्रं विराजितं शोभितं भवति तन्नैपुण्यं तादृशं चातुर्यं चिन्तय समालोचय यथा तत्प्राप्नोषि। विशदागमं निपानमधिगम्य शान्तसुधारसपानं विरचय विशदं निर्दोषं आगमनिपानं सिद्धान्तजलाशयं अधिगम्य गुरुमुखात्प्राप्य शान्तसुधारसपानं शान्तस्वभावामृतस्वादनं विरचय कुरुष्वेत्यर्थः ॥ ७ ॥

॥ इति श्रीतपागच्छीयसंविग्नशाखीयपरममुनिश्रीवृद्धिविजयमुख्यशिष्यश्रीमुक्तिविजयगणिसत्तीर्थ्यतिलकमुनिश्रीवृद्धिविजयचरणयुगसेविना पंक्तिगंभीरविजयगणिना विरचितायां श्रीशान्तसुधारसटीकायामशुचित्वभावनाविभावनो नाम षष्ठः प्रकाशः समजनि ॥

## ॥ सप्तमः प्रकाशः ॥

षष्ठे प्रकाशेऽशुचिभावना प्रोक्ता । अशुचिता चाश्रवसंपादितपरसंबन्धाज्जायते इत्यनेन संबन्धेनायातामाश्रवभावनां विभावयन्नाह । तत्रायमादिमः श्लोकः—

( भुजङ्गप्रयातं वृत्तम् )

यथा सर्वतो निर्झरैरापतद्भिः प्रपूर्येत सद्यः पयोभिस्तटाकः ।
तथैवाश्रवैः कर्मभिः संभृतोऽङ्गी भवेद्व्याकुलश्चञ्चलः पंकिलश्च ॥ १ ॥

व्याख्या—यथाऽनेन प्रकारेण सर्वतो दिग्विदिग्भ्यः आपतद्भिर्निर्झरैः आ समन्तादनिरुद्धैः पतद्भिः आगत्य मध्ये प्रविशद्भिः निर्झरैः पर्वतादिभ्यो निर्गतजलप्रवाहैः तटाकः सरः सद्यः शीघ्रं पयोभिः पानीयैः प्रपूर्येत भ्रियेत पालिबन्धानपि त्रोटयेत् । तथैव निर्झरपानीयैः सरःप्रकारेणैव आश्रवैः मिथ्यात्वाविरतिहिंसाऽसत्यस्तेयमैथुनममत्वसेवनैरागच्छद्भिः कर्मभिराश्रवासेवनफलभूतज्ञानावरणीयादिकर्मबन्धप्रवाहैः संभृतोऽनन्तानन्तैः कर्मवर्गणाराशिभिरतिशयेनावष्टब्धो व्याप्त इति यावत् । अङ्गी प्राणी व्याकुलश्चञ्चलः पंकिलश्च भवेत् व्याकुलो महापीडाभिरत्यन्तविह्वलः चञ्चलो भवाद्भवभ्रमणशीलत्वेनास्थिरस्थितिकः पंकिलः कर्मकर्दमलिप्तमलिनः सदज्ञानान्धो भवेज्जायेतेत्यर्थः ॥ १ ॥

अथ बाधकतरा आश्रवपराजयखिन्नास्तज्जयाय सञ्चिन्तातुरा आहुः—

( शार्दूलविक्रीडितं वृत्तम् )

यावत्किञ्चिदिवानुभूय तरसा कर्मेह निर्जीर्यते तावच्चाश्रवशत्रवोऽनुसमयं सिञ्चन्ति भूयोऽपि तत् ।
हा कष्टं कथमाश्रवप्रतिभटाः शक्या निरोद्धुं मया संसारादतिभीषणान्मम हहा मुक्तिः कथं भाविनी २॥

व्याख्या–इह नरभवादिके जन्मनि यावत् यावत्काले यावत्परिमाणं च कर्म पूर्वसञ्चितपुण्यपापं किञ्चिदिव महाराशिमध्याल्लेशमात्रमिव अनुभूय तत्फलविपाकं सातासातं भुक्त्वा निर्जीर्यते नितरां जीर्णीकृत्य आत्मप्रदेशेभ्यः पृथक्क्रियते । तावत् तस्मिन्नेव समयादिके काले तावत्प्रमाणं कर्मदलिकं च तरसा शीघ्रतया आश्रवशत्रवः कर्मबन्धहेतवो वैरिणः भूयोऽपि पुनरपि अनुसमयं समये समये तत्पुण्यपापबन्धरूपकर्म सरूपविरूपतया सिञ्चन्ति पूर्वबद्धशेषे क्षिप्त्वा वर्धयन्ति । हा कष्टं महासंकटे समागतोऽस्मि । मया मल्लक्षणेन जनेन आश्रवप्रतिभटाः आश्रवरूपकर्मशत्रुयोद्धारः कथं केनोपायेन रोद्धुं समापतन्तः प्रतिस्खलयितुं शक्याः । हहा कष्टं अतिभीषणान्महाभयानकात् संसारात् भवकारागृहात् मम मुक्तिर्मोक्षः कथं केनाप्युपायेन भाविनी भविष्यति न वेति चिन्तयामीत्यर्थः ॥ २ ॥

आश्रवमूलभेदानाह—

( प्रहर्षिणी वृत्तम् )

मिथ्यात्वाविरतिकषाययोगसंज्ञाश्चत्वारः सुकृतिभिराश्रवाः प्रदिष्टाः ।
कर्माणि प्रतिसमयं स्फुटैरमीभिर्बध्नन्तो भ्रमवशतो भ्रमन्ति जीवाः ॥ ३ ॥

व्याख्या—सुकृतिभिः प्रवरपुण्यभाग्भिरर्हद्भिः सुनिपुणपण्डितैश्च मिथ्यात्वाविरतिकषाययोगसंज्ञा मिथ्यात्वं देवगुरुधर्मवस्तुस्वरूपेषु विपर्यासवती श्रद्धा, अविरतिर्हिंसादिभ्योऽनिवर्तनं, कषाया रागादिपरिणामाः, योगा मनोवाक्कायप्रवृत्तय इतिसंज्ञा इतिनामानश्चत्वारश्चतुर्विधाः आश्रवाः कर्मबन्धहेतवः प्रदिष्टाः कथिताः । जीवाः प्राणिनः भ्रमवशतो देवगुरुधर्मसुखादिभ्रान्तिवशात्स्फुटैः स्पष्टाविर्भूतैः अमीभिराश्रवैः प्रतिसमयं समये समये कर्माणि नूतनपुण्यपापानि बध्नन्त आत्मप्रदेशैः सह क्षीरनीरवद्भेदसंबन्धं कुर्वन्तः भ्रमन्ति चतुर्गतिषु पर्यटन्तीत्यर्थः ॥ ३ ॥

अथोत्तरभेदानाह— (रथोद्धतावृत्तम्)

इन्द्रियाव्रतकषाययोगजाः पञ्च पञ्च चतुरन्वितास्त्रयः ।
पञ्चविंशतिरसत्क्रिया इति नेत्रवेदपरिसंख्ययाऽप्यमी ॥ ४ ॥

व्याख्या—अमी आश्रवाः क्रमेण इन्द्रियाव्रतकषाययोगजाः पञ्च पञ्च चतुरन्वितास्त्रयः, इन्द्रियाणि पञ्च, अव्रतानि पञ्च, कषायाश्चत्वारो, योगास्त्रय इति सप्तदशभेदा इन्द्रियादिजाश्रवाः । पञ्चविंशतिश्चासत्क्रियामीलनादिति प्रोक्तप्रकारेण । नेत्रवेदपरिसंख्ययापि द्विचत्वारिंशत्प्रकारा अपि भवन्तीत्यर्थः ॥ ४ ॥

अथ कर्तव्यमुपदिशति— (इन्द्रवज्रावृत्तम्)

इत्याश्रवाणामधिगम्य तत्त्वं निश्चित्य सत्त्वं श्रुतिसन्निधानात् ।
एषां निरोधे विगलद्विरोधे सर्वात्मना द्राग्यतितव्यमात्मन् ॥ ५ ॥

व्याख्या–हे आत्मन् इति पूर्वोक्तप्रकारेण । आश्रवाणां प्रोक्तस्वरूपाणां । तत्त्वं आत्मनो बन्धहेतुत्वरूपपरमार्थं । अधिगम्य ज्ञात्वा श्रुतिसन्निधानात् शास्त्राभ्यासपरिचयात् । सत्त्वं तेषां जये सदुपायपूर्वकसामर्थ्यं । निश्चित्य निर्धार्य । धिगलद्विरोधे विशेषेण गलन्तः विलयं यान्तः विरोधाः सर्वजीवेषु वैरभावा यस्मिंस्तस्मिन् । एषां निरोधे आश्रवसंवरणे । झाक् शीघ्रतया । सर्वात्मना सर्वोद्यमेन । यतितव्यं प्रयत्नपरेण भाव्यमित्यर्थः ॥ ५ ॥

अथ गेयपद्याष्टकेनाश्रवभावनां विभावयन्नाह—

परिहरणीया रे, सुकृतिभिराश्रवा, हृदि समतामवधाय ।
प्रभवन्त्येते रे, भृशमुच्छृंखला, विभुगुणविभववधाय, परि० ॥ १ ॥

व्याख्या–रे चेतन मन्दधीः सुकृतिभिः सर्वप्रधानपुण्यवद्भिरर्हद्भिः विशालधीपंक्तिभिश्च आश्रवा हिंसाकरणादिबन्धहेतवः परिहरणीयाः परिहर्तुमेव योग्याः प्रोक्ताः सर्वदुःखहेतुत्वादतस्त्वमपि समतां हृदि अवधाय समता सर्वत्र निरीहता मैत्र्यादिरूपपरिणतिः तां हृदि मनसि अवधाय संस्थाप्य तान् परिहर । अकृतपरिहारे जने तु एते हिंसारम्भादयः भृशमतिशयेन उच्छृंखलाः निर्मुक्तबन्धनत्वेनोच्छ्रिता मुत्कलाः सन्त इति यावत् । विभुगुणविभववधाय भवन्ति विभवो विश्ववस्तुव्यापिनो ये गुणाः केवलज्ञानदर्शनादयस्तद्रूपो यो विभवः संपत्तिस्तस्य वधाय विनाशाय भवन्ति संपद्यन्त इत्यर्थः ॥ १ ॥

अथ प्रत्येकाश्रवस्वरूपं विभावयन् प्रथमतो मिथ्यात्वरूपमाह—

कुगुरुनियुक्ता रे, कुमतिपरिप्लुताः, शिवपुरपथमपहाय ।
प्रयतन्तेऽमी रे, क्रिया दुष्टया, प्रत्युत शिवविरहाय, परि० ॥ २ ॥

व्याख्या–अमी मिथ्यात्वोदयवशीकृताः प्राणिनः कुगुरुनियुक्ताः कुत्सिता अज्ञानोदयेनाज्ञातयथार्थमोक्षमार्गादिस्वरूपा ये गुरवो धर्मोपदेष्टारस्तैः कुगुरुभिर्नियुक्ताः येऽशुद्धमार्गे नियोजिताः प्रवर्तिता इति यावत् । कुमतिपरिप्लुताः तथा ये स्वत एव मिथ्यात्वोदयवशाः कुमत्या अनाभोगिकानभिग्राहिकमिथ्यात्वोदयेन विपर्यस्तबुद्ध्या परिप्लुताः सद्धर्मेऽस्थिराश्चञ्चलाः कृताः । शिवपुरपथमपहाय ते प्रकारद्वयोक्ताः शिवपुरपथं रत्नत्रयमयं मोक्षमार्गं अपहाय परित्यज्य । दुष्टया हिंसारंभमय्याऽसर्वज्ञप्रणीतयाऽशुद्धया । क्रियया जलाभिषेकपञ्चाग्नितपनरूपया । प्रयतन्ते प्रौढोद्यमा वर्तन्ते । तत् प्रत्युत शिवविरहाय प्रत्युत मोक्षप्राप्तिमिच्छन्तोऽपि, शिवविरहाय मोक्षवियोगाय संपद्यते । कृत्यश्रद्धाविपर्यासाभ्यां फलविपर्यासत्वादित्यर्थः ॥ २ ॥

अविरत्याश्रवमाह—

अविरतचित्ता रे, विषयवशीकृता, विषहन्ते विततानि ।
इह परलोके रे, कर्मविपाकजान्यविरलदुःखशतानि, परि० ॥ ३ ॥

व्याख्या—अविरतचित्ताः न विरतं विषयहिंसारंभादिभ्यो विरमणं न प्राप्तं चित्तमन्तःकरणं येषां तेऽविरतचित्ता प्राणिनः। विषयवशीकृता विषयैः शब्दादिभिर्वशीकृताः तदधीनतां प्राप्ताः सन्तः। इह परलोके इह लोके दुर्दशाजीः धिक्कारोगशोकशरीरनाशादिना परलोके नरकपातादिना विततानि अतिदीर्घकालिकत्वेन विस्तीर्णानि। कर्मविपाकजानि-पूर्वार्जितदुष्कृतफलोदयजनितानि। अविरलदुःखशतानि अविरलानि सघननिरन्तराणि दुःखानां कष्टानां शतानि सहस्राणि। विषहन्ते तैः पीड्यन्त इत्यर्थः ॥ ३ ॥

इन्द्रियजमाश्रवमाह—

करिझषमधुपा रे, शलभमृगादयो, विषयविनोदरसेन।
हन्त लभन्ते रे, विविधा वेदना, बत परिणतिविरसेन, परि० ॥ ४ ॥

व्याख्या—करिझषमधुपाः करिणो गजाः झषा मीना मधुपा भ्रमराः। शलभमृगादयः शलभाः खंजरीटपतंगादि-कीटाः मृगा हरिणा आदिना सर्पादयो ग्राह्याः। बत खेदे। परिणतिविरसेन परिणतौ फलपाके विरसो महादुःखकरो भवति यः स तथाभूतस्तेन। विषयविनोदरसेन विषयविलासप्रेम्णा। विविधा वेदना लभन्ते विविधा बहुभिर्भेदैर्भिन्ना वेदना व्यथाः कदर्थना विडंबना इति यावत्। लभन्ते प्राप्नुवन्ति तर्हि पञ्चेन्द्रियविषयप्रसक्तानां का कथेत्यर्थः ॥ ४ ॥

कषायजमाश्रवमाह—

उदितकषाया रे, विषयवशीकृता, यान्ति महानरकेषु परिवर्तन्ते रे, नियतमनन्तशो, जन्मजरामरणेषु, प०

व्याख्या–उदितकषाया रे रे चेतन सर्वदोषमूलान् कषायान् परिहर । यत उदितकषाया उदिता हृदये आविर्भूताः कषायाः क्रोधमानमायालोभा येषां ते तथा सन्तः सुभूमपरशुरामादिवत् । विषयवशीकृताः कामभोगाधीनाः कृतयुद्धादिमहारंभाः । महानरकेषु सप्तमपृथिवीस्थाप्रतिष्ठानादिषु । यान्ति गच्छन्ति । ततो निर्गत्य नियतमवश्यंभावेन । जन्मजरामरणेषु स्वल्पतरस्वल्पतमायुष्केषु प्रायेण तिर्यक्षु । अनन्तशोऽनन्तवारान् । परिवर्तन्ते भूयो भूय उत्पद्यन्त इत्यर्थः ॥५॥

योगजमाश्रवमाह—

मनसा वाचा रे, वपुषा चञ्चला, दुर्जयदुरितभरेण ।
उपलिप्यन्ते रे, तत आश्रवजये, यततां कृतमपरेण, परि० ॥ ६ ॥

व्याख्या–रे प्राणिन् मनसा दुष्टमनोव्यापारेण । वाचा दुर्भाषणेन । वपुषा दुष्टया कायचेष्टया । चञ्चलाश्चपलाः प्राणिनः । दुर्जयदुरितभरेण दुर्जयेन दुःखेन जीयते मुच्यते यस्मादिति दुर्जयः तेन ईदृशेन दुरितभरेण पापसंभारेण । उपलिप्यन्ते अतिशयेनाशुभकर्मकर्दमलिप्ता भवन्ति । ततः पूर्वोक्तदुःखहेतुत्वात् आश्रवजये बन्धहेत्वननुभवे । यततां सुष्ठूद्यमेन प्रवर्ततां । अपरेण बन्धहेतुप्रवर्तनेन कृतं पर्याप्तं मा क्रियतामित्यर्थः ॥ ६ ॥

शुभाश्रवा अपि शुभबन्धहेतुत्वेन मोक्षप्राप्तिप्रतिबन्धका भवन्त्यतो वीतरागत्वसमुत्पादनेन तेऽपि परिहरणीया इत्युपदिशति

शुद्धा योगा रे, यदपि यतात्मनां, स्रवन्ते शुभकर्माणि ।
काञ्चननिगडांस्तान्यपि जानीयात्, हतनिर्वृतिशर्माणि, परि० ॥ ७ ॥

व्याख्या–रे चेतन शुभबन्धसाधनप्राप्त्या कृतार्थत्वं मा मन्यस्व। यदपि यदापि त्वं शुद्धं सरागसंयमं प्राप्तो भवसि तदापि शुभबन्धको न त्वबन्धकः। यतो यतात्मनां संयमवतां योगा मनोवाक्कायव्यापाराः शुभ्राः पापप्रकृतीनां प्रायोऽबन्धका भवन्ति, तैरपि शुभकर्माणि देवायुर्देवगतिसातावेदनीयोच्चैर्गोत्रादीनि स्रवन्ति बन्धत्वेनागच्छन्ति। अतस्तान्यपि शुभकर्माण्यपि हृतनिर्वृतिशर्माणि हृतं प्रतिबद्धं समुपचक्रुरूमिति यावत् निर्वृतिशर्म सहजं वृत्तिपञ्चकरहितं मुक्तिस्थं सुखं यैस्तानि तथा। काञ्चननिगडान् जानीयात् स्वर्णमयपादबन्धनशृंखला बोधेदित्यर्थः॥ ७॥

उपसंहारमाह—

**मोदस्वैवं रे, साश्रवपाप्मनां रोधे धियमाधाय। शान्तसुधारसपानमनारतं विनय विधाय विधाय॥८॥**

॥ इति श्रीशान्तसुधारसगेयकाव्ये आश्रवभावनाविभावनो नाम सप्तमः प्रकाशः॥

व्याख्या–रे प्राणिन् एवं पूर्वोक्तप्रकारेण साश्रवपाप्मना सहवर्त्याश्रवसहितानां पाप्मनां पापरूप आत्मा स्वरूपं येषां कर्मणां तानि तथा तेषां। रोधेऽनुभवोपाये निर्बन्धस्वभाव इति यावत्। धियं निजां बुद्धिं। आधाय संस्थाप्य। हे विनय हे विविक्तचेतन। अनारतं निरन्तरं। शान्तसुधारसपानं शान्तपरिणामामृतरसास्वादं। विधाय विधाय कृत्वा कृत्वा। मोदस्व प्रमोदं भजस्व॥८॥

॥ इति श्रीतपागच्छीयसंविग्नशाखीयपरममुनिश्रीबुद्धिविजयमुख्यशिष्यश्रीमुक्तिविजयगणिसतीर्थ्यतिलकमुनिश्रीवृद्धिविजयचरणयुगसेविना पंक्तिगंभीरविजयगणिना विरचितायां शान्तसुधारसटीकायामाश्रवभावनाविभावनो नाम सप्तमः प्रकाशः समजनि॥

## ॥ अष्टमः प्रकाशः ॥

अत्रादित आरभ्य सप्तमप्रकाशं यावद्विरमणस्वभाववत्यो भावनाः प्रोक्ताः । अथेत आरभ्य प्रकरणसमाप्तिं यावदादरोपादेयस्वभावा भावना वक्ष्यति । तत्र सप्तमप्रकाशे चाश्रवनिरोधायोपदिष्टं । स तु संवरेण निरुद्धो भवतीत्यनेन संबन्धेनायातां संवरभावनां विभावयति । तस्याश्चायमादिमः श्लोकः—

( स्वागतावृत्तद्वयम् )

येन येन च इहाश्रवरोधः संभवेन्नियतमौपयिकेन ।
आद्रियस्व विनयोद्यतचेतास्तत्तदान्तरदृशा परिभाव्य ॥ १ ॥

व्याख्या–विनयोद्यतचेता विनयो निवृत्तिर्विषयादिपरभावेष्वप्रवृत्तिरिति यावत् तस्मिन्नुद्यतं उद्यमतत्परं जातं चेतो मन आत्मा वा यस्य स तथा । इह जैनशासने स्थितः । औपयिकेन उपाये भव उपायस्तत्यो वौपयिकः तेनोपायत्वप्राप्तेनोपायत्वयुक्तेन वा । येन येन च आश्रवरोधो नियतं संभवेत् येन येन संयमसम्यक्त्वक्षमादिना यो मिथ्यात्वादिरूप आश्रवो बन्धहेतुः नियतमवश्यंभावेन रोधोऽभावप्राप्तः संभवेत् अनेनायं रुद्धो भविष्यतीति । आन्तरदृशा ज्ञानचक्षुषा पूर्वं परिभाव्य सम्यक् समालोच्य तत्र तत्र तस्मिंस्तस्मिन्नाश्रवजये तत्तदुपायभूतसंवरं आद्रियस्व समाचरेत्यर्थः ॥ १ ॥

तदेव क्रमशो दर्शयति—

संयमेन विषयाविरतत्वे दर्शनेन वितथाभिनिवेशम् ।
ध्यानमार्तमथ रौद्रमजस्रं चेतसः स्थिरतया च निरुन्ध्याः ॥ २ ॥

व्याख्या-निरुन्ध्या इति प्रत्येकं संबन्धनीयं । ततः संयमेन प्रवृत्तिनिरोधकस्वभावेन षड्जीवनिकायरक्षणप्रयत्नस्वभावेन च । विषयाविरतत्वे विषयाः शब्दादिपञ्चविधास्तेष्वभिलाषरागद्वेषप्रवृत्त्यात्मका ये आश्रवाः तथा न विद्यते विरतं हिंसादिभ्यो निवर्तनं यत्र स्वभावे सोऽविरतस्तद्भावोऽविरतत्वं, विषयाश्चाविरतत्वं चेति विषयाविरतत्वे द्वे आश्रवरूपे निरुन्ध्याः निरुन्धनं विधेहि । दर्शनेन शुद्धदेवगुरुधर्मतत्त्वश्रद्धानरूपसम्यक्त्वेन । वितथाभिनिवेशं विगतमपगतं तथात्वं याथार्थ्यं यस्मादभिनिवेशादसदाग्रहात्स वितथाभिनिवेशस्तं विपरीतश्रद्धानाश्रवं निरुन्ध्या इति पूर्ववत् । अथानन्तरमार्तमार्तध्यानं रौद्रं च रौद्रध्यानं पूर्वोक्तरूपं ध्यानद्वयमाश्रवं अजस्रं सततं निरन्तरं चेतसो मनोवृत्तेः स्थिरतया स्थिरा निश्चला तद्भावस्तत्ता तया शुद्धध्येये स्थिरैकाग्रमनोधारणया मिथ्यात्वदुर्ध्यानजन्यान् आश्रवान् निरुन्ध्या इत्यर्थः ॥२॥

( शालिनीवृत्तम् )

क्रोधं क्षान्त्या मार्दवेनाभिमानं हन्या मायामार्जवेनोज्ज्वलेन ।
लोभं वारांराशिरौद्रं निरुन्ध्याः सन्तोषेण प्रांशुना सेतुनेव ॥ ३ ॥

व्याख्या–क्षान्त्या परकृतापराधानां सम्यक्क्रोधाभावेन सहनपरिणतिः क्षान्तिस्तया क्षान्त्या क्रोधं कोपस्वभावोद्भूताश्रवं । मार्दवेन मृदुर्नम्रपरिणामो विनीतस्वभावः तद्भावो मार्दवं तेन अभिमानं स्वगुणैः स्वस्मिन् बहुमानेनाहंकृतिरूपस्तदुद्भवमाश्रवं । उज्ज्वलेनार्जवेन उज्ज्वलं अतिशयेन निर्मलं निर्दोषं इति यावत् आर्जवं ऋजोः सरलस्वभावस्य भावः आर्जवं तेन मायां मा निषेधे या गतौ ममाधारोऽयं जीवो मा सद्गतिं यातु गच्छत्विति ज्ञापिका वक्रा बुद्धिर्माया तां हत्वा निर्वासयेः । प्रांशुना सेतुनेव प्रांशुरतिशयेन समुन्नतः सेतुः पालिबन्धस्तेनेव तत्तुल्येन अतिप्रधानेन संतोषेण निर्लोभस्वभावेन वारांराशिरौद्रं मकुभितसमुद्रादप्यतिभयानकमनन्तत्वात् लोभं तृष्णाजन्याश्रवं निरुन्ध्या निराकुर्वित्यर्थः ॥ ३ ॥

( स्वागतावृत्तम् )

गुप्तिभिस्तिसृभिरेवमजय्यान् त्रीन् विजित्य तरसाधमयोगान् ।
साधुसंवरपथे प्रयतेथा लप्स्यसे हितमनीहितमिद्धम् ॥ ४ ॥

व्याख्या–अजय्यान् जेतुमशक्यान् अयतनाप्रवृत्तिमतश्च । त्रीन् त्रिविधान् मनोवाक्कायप्रभवान् । अधमयोगान् अशुभव्यापारान् आश्रवान् । तिसृभिरेव गुप्तिभिः त्रिविधाभिरपि मनोवाक्कायप्रवृत्तिनिरोधरूपाभिर्गुप्तिभिरशुभनिवृत्तिशुभप्रवृत्तिभिश्च । तरसा शीघ्रं । विजित्य विशेषेण जित्वा । साधुसंवरपथे शुद्धसंवरमार्गे । प्रयतेथाः प्रधानोद्यमपरो भव । तथाकृते सति त्वं अनाहृतमखण्डं सनातनं सिद्धं स्वाभाविकं हितं मोक्षसुखं लप्स्यसे प्राप्तो भविष्यसीत्यर्थः ॥४॥

अतो वक्ष्यमाणप्रयत्नपरो मोक्षगमनसज्जो भवेत्युपदिशति—

( मन्दाक्रान्तावृत्तम् )

एवं रुद्धेष्वमलहृदयैराश्रवेष्वाप्तवाक्यश्रद्धाचञ्चत्सितपटपटुः सुप्रतिष्ठानशाली ।
शुद्धैर्योगैर्जवनपवनैः प्रेरितो जीवपोतः स्रोतस्तीर्त्वा भवजलनिधेर्याति निर्वाणपुर्याम् ॥ ५ ॥

व्याख्या—एवं पूर्वोक्तेनौपयिकेन संवरेण आश्रवेषु प्रोक्तस्वरूपेषु निरुद्धेषु स्वस्मिन् प्रोज्झावासत्तां गतेषु सत्सु । तत एवामलहृदयैरमलतां दोषबन्धमलोत्पत्तिरहितत्वेन निर्मलतां प्राप्तानि हृदयानि चेतांसि येषां ते तथा तैः । शुद्धयोगैर्जवनपवनैः शुद्धाः समग्रमिथ्यात्वजन्यविपर्यासाविध्यनादरहिंसादिदोषवर्जिताः योगा मनोवाक्कायजा धर्मव्यापारास्तैरुद्भूतैस्तद्रूपैर्वा जवनपवनैः जवनाः शीघ्रवेगकारिणोऽनुकूला ये पवना वायवस्तैः प्रेरितः प्रेरणं नियोगेनेप्सितगमनं प्रापितः । आप्तवाक्यश्रद्धाचञ्चत्सितपटपटुः आप्ता निःसत्ताकीकृतरागद्वेषमोहा वीतरागसर्वज्ञाः तेषां यानि वाक्यानि उपदेशवचनसमूहरूपागमास्तेषां तेषु वा या श्रद्धा शुद्धनिश्चलास्तिकतापरिणतिः तद्रूपश्चञ्चन् शुद्धप्रकाशसुन्दरः सितपटपटुः सितपटः प्रवहणमध्यगतस्थूणोपरिसमारोपितमहापटः सढ इति लोकप्रसिद्धः तेन पटुः स्फुटनिविरुद्धावनापवनपूरितप्रवहणगतिवेगवर्धकः । सुप्रतिष्ठानशाली सुष्ठु शोभनं व्रतकर्तव्यं संस्कारधैर्यपूर्णप्रतिष्ठानं सुदृढमधोभागाश्रयस्तेन शाली शोभमानः । जीवपोतश्चेतनप्रवहणं । भवजलनिधेः संसारसागरस्य । स्रोतः प्रवाहं । तीर्त्वा समुत्तीर्य । निर्वाणपुर्यां सनातनसहजसुखनगर्यां । याति गच्छति निरुद्धसर्वाश्रवः शुद्धश्रद्धायोगसंवरवान्मोक्षगामीत्यर्थः ॥ ५ ॥

अथ गेयपद्याष्टकेन संवरभावनां विज्ञापयति—

श्रृणु शिवसुखसाधनसदुपायं श्रृणु शिवसुखसाधनसदुपायम् ।
ज्ञानादिकपावनरत्नत्रयपरमाराधनमनपायम्, श्रृ० ॥ १ ॥

व्याख्या—हे आत्मन् त्वमर्हदादिभिः सज्ज्ञानिभिरुपदिष्टं शिवसुखसाधनसदुपायं श्रृणु शिवः सर्वथा निरुपद्रवो मोक्षस्तत्संबन्धि तस्मिन् यत्सुखं महानन्दः शिवसुखं तस्य यत्साधनं निष्पादकमीदृशं सदुपायभूतं सत् सत्यः सफलः साधुः सत्पुरुषपूजितः प्रशस्त आदरणीयस्वरूप उपायः सदुपाय उपेयोपगमहेतुस्तं श्रृणु यथाशास्त्रं कथ्यमानं श्रवणविषयं कुरुष्व । ज्ञानादिकपावनरत्नत्रयपरमाराधनमनपायं सम्यग्ज्ञानदर्शनचारित्ररूपस्य पावनस्य आत्मनः पवित्रताकारणस्य रत्नत्रयस्यानन्तरप्रोक्तस्य परमं सर्वोद्यमेनोत्कृष्टं निरतिचारं यदाराधनमखंडैकधारया पालनं वर्तते तदनपायं फलवियोगेन वर्जितमवश्यं मोक्षपदमापकः सदुपायो वर्तते अतस्तदाराधनतत्परो भवेत्यर्थः ॥ १ ॥

तदाराधनविधिमेवोपदिशन्नाह—

विषयविकारमपाकुरु दूरं क्रोधं मानं सहमायम् ।
लोभं रिपुं च विजित्य सहेलं भज संयमगुणमकषायम्, श्रृ० ॥ २ ॥

व्याख्या—रिपुं चेति प्रत्येकमभिसंबध्यते । क्रोधं मानं सहमायं लोभं चतुर्विधं । ततः परस्मिन् क्रोधमिश्रमानपरि-

णामं द्वेषं, स्वस्मिन् श्रितं स एव रागरूपं, प्रोक्तरीत्यैव सर्वैः सह संयोगाः कार्याः । यथा परस्मिन् वृत्तं क्रोधं समायं क्रोधक्षोभं द्वेषरूपं, एवं मानं समायं मानक्षोभमपि द्वेषरूपं । स्वस्मिन्नाश्रितं क्रोधं समायं मानं समायं मानक्षोभं रागरूपं। समायं क्षोभं तु मिश्रितपरिणामं रागमेव स्वस्मिन् परस्मिंश्चेति निश्चयनयमतं । इति षड्विधं रिपुं वैरिवर्गं । सदेखं स यथा सत्वरं जितो भवति तथा तं विजित्य तस्य विजयं विधाय । अकषायं न विद्यते कषायोऽनन्तानुबन्ध्यादिषोडशहास्यादिनवनोकषायरूपपञ्चविंशतिभेदभिन्नो रागद्वेषरूपो वा यस्मिन्कर्मणि यथा स्यात्तथा अकषायं । संयमगुणं संयमः शुभाशुभप्रवृत्तिनिरोधस्वभावस्तद्रूपो गुणो जीवधर्मो जीवस्य निर्वृतिस्वभाव इति यावत् तं । भज सदैव सेवस्व । तेन च विषयविकारं विषयाभिलाषरूपविभावं दूरमतिशयेनापाकुरु निषेधय । तदेव रत्नत्रयस्य परमाराधनमित्यर्थः ॥ २ ॥

उपशमरसमनुशीलय मनसा रोषदहनजलदप्रायम् ।
कलय विरागं धृतपरभागं हृदि विनयं नायं नायम्, शृ० ॥ ३ ॥

व्याख्या—हे आत्मन् पुनराराधनकृते प्रथमतः रोषदहनजलदप्रायं रोषः कोपः स एव दहनो वनाग्निस्तस्य निर्वापणे जलदप्रायं मेघवृष्टितुल्यं । मनसा हृदयेन । उपशमरसं उपशमः क्षमा शान्तिः निर्वृतिपरिणामस्तस्मिन् यो रसः प्रेमनिमग्नता तं । अनुशीलय सदा पालय । विनयं नायं नायं नीत्वा नीत्वा प्राप्य प्राप्येति यावत् विनयं विशिष्टशास्त्रशिक्षासमन्वितनिर्वृतिनीतिं । धृतपरभागं धृतः लब्धः संपन्न इति यावत् परभागः परमोत्कर्षः यस्य स तथाविधस्तं । विरागं वैराग्यस्वभावं । हृदि कलय मनसि लक्ष्यस्वेत्यर्थः ॥ ३ ॥

आर्तं रौद्रं ध्यानं मार्जय दह विकल्परचनानायम् ।
यदियमरुद्धा मानसवीथी तत्त्वविदः पन्था नायम्, शृ० ॥ ४ ॥

व्याख्या-आर्तं रौद्रं ध्यानं मार्जय कचवरपुञ्जवद्बहिरुत्क्षिप वा माऽर्जय तयोरुपार्जनं मा कुरु । विकल्परचना-नायं शुभाशुभसंकल्पश्रेणिरूपं नायं जालं दह भस्मीकुरु । तथा यदियं तव मानसवीथी मनोहट्टश्रेणिः अरुद्धा सदाऽसंवरितद्वाराऽस्ति, तत् अयं तत्त्वविदः परमार्थज्ञस्य पन्था मार्गो न भवतीति ज्ञात्वा संवृणुष्वेत्यर्थः ॥ ४ ॥

संयमयोगैरवहितमानसशुद्ध्या चरितार्थय कायम् ।
नानामतरुचिगहने भुवने निश्चिनु शुद्धपथं नायम्, शृ० ॥ ५ ॥

व्याख्या-अवहितमानसशुद्ध्या अवहिता समाधिस्वभावं प्राप्ता सावधाना वा मानसशुद्धिर्निर्दोषमनोवृत्तिस्तया । तथा संयमयोगैः षट्कायजीवरक्षणव्यापारैश्च । कायं प्राप्तं स्वशरीरं । चरितार्थय निष्फलत्वं गच्छन्तं सफलं कुरु । नाना-मतरुचिगहने अनेकमतश्रद्धाभिर्भृते । भुवने जगति । नायं नीतियुक्तं शुद्धपथं निश्चिनु सुविमर्शाभ्यासाभ्यां यथार्था-गमोक्तं निर्दोषं पंथानं मोक्षमार्गं निश्चिनु निर्धारयेत्यर्थः ॥ ५ ॥

ब्रह्मव्रतमङ्गीकुरु विमलं बिभ्राणं गुणसमवायम् ।
उदितं गुरुवदनादुपदेशं संगृहाण शुचिमिव रायम्, शृ० ॥ ६ ॥

व्याख्या–गुणसमवायं गुणा ज्ञानारोग्यप्रभावादयस्तेषां यः समवायः संहतिस्तं। बिभ्राणं धारयन्तं तेषां निवासस्थानमित्यर्थः। ईदृशं विमलं निरतिचारं ब्रह्मव्रतं ब्रह्मचर्यं। अङ्गीकुरु स्वीकुरु। गुरुवदनादुदितं गुरुमुखतो विनिर्गतं। शुचिं पवित्रं। उपदेशं हितशिक्षातत्त्ववार्तादिकं। रायमिव रत्नादिनिधानमिव। संगृहाण सम्यगविस्मारणतया धारयेत्यर्थः॥ ६॥

संयमवाङ्मयकुसुमरसैरतिसुरभय निजमध्यवसायम्।
चेतनमुपलक्षय कृतलक्षणज्ञानचरणगुणपर्यायम्, भृ०॥ ७॥

व्याख्या–संयमवाङ्मयकुसुमरसैः संयमः सप्तदशविधः सर्वाश्रवसंरोधश्च तथा वाङ्मयः संयमस्योत्पादनवर्धनपालनफलप्रापणगुणविधिमय आगमस्तयोर्विषयेऽनारतान्यासभावनात्मकानि कुसुमानि सुरभिपुष्पाणि तेषां तेषु वा रसाः प्रेमभरविशेषास्तैः। निजं स्वकीयं। अध्यवसायं परिणतिं। अतिसुरभय सुप्रशस्तगुणप्रसिद्धिमयं संपादय। कृतलक्षणज्ञानचरणगुणपर्यायं कृतानि प्रसिद्धानि लक्षणानि स्वरूपभूतानि ज्ञानं सामान्यविशेषबोधस्वभावः, चरणं सर्वपरभावनिवृत्तिस्वभावः, गुणा निराकारस्थैर्यादयः, पर्याया उपयोगपरावर्तिरूपेणोत्पादव्ययध्रौव्यागुरुलघ्वादयः, एषां पदानां समाहारद्वन्द्वे कृते तत्कृतलक्षणज्ञानचरणगुणपर्यायं येन तत् चेतनं जीवस्वरूपं उपलक्षय अयमहमिति प्रत्यभिजानीहीत्यर्थः॥ ७॥

वदनमलंकुरु पावनरसनं जिनचरितं गायं गायम् ।

सविनय शान्तिसुधारसमेनं चिरं नन्द पायं पायम्, शृ० ॥ ८ ॥

॥ इति शान्तसुधारसगेयकाव्ये संवरभावनाविभावनो नामाष्टमः प्रकाशः ॥

व्याख्या—हे आत्मन् सविनय विनयविधिसमन्वित। त्वं जिनचरितं जिनानां चरितं विहारोपकारधर्मोपदेशादिप्रवर्तनं । गायं गायं गीत्वा गीत्वा । पावनरसनं पावना पवित्रा रसना जिह्वा यस्मिंस्तत् पावनरसनं । वदनं मुखारविन्दं । अलंकुरु भूषय । एनमनन्तरदर्शितं । शान्तसुधारसमुक्तस्वरूपं । पायं पायं पीत्वा पीत्वा । चिरं प्रभूतकालं यावत् । नन्द सुखसमृद्धो भवेत्यर्थः ॥ ८ ॥

॥ इति श्रीतपागच्छीयसंविग्नशाखीयपरममुनिश्रीबुद्धिविजयमुख्यशिष्यश्रीमुक्तिविजयगणिसतीर्थ्यतिलकमुनिश्रीवृद्धिविजयचरणयुगसेविना पंडितगंभीरविजयगणिना विरचितायां श्रीशान्तसुधारसटीकायां संवरभावनाविभावनो नामाष्टमः प्रकाशः समजनि ॥

## ॥ नवमः प्रकाशः ॥

उक्तोऽष्टमः प्रकाशः । तदन्ते चेतनोपलक्षणायोपदिष्टं । तच्च कर्मावृत्त्यपकर्षेण साध्यं । तदपकर्षस्तु निर्जराधीन इत्यनेन संबन्धेनायातां नवमीं निर्जराभावनां विभावयन्नाह । तस्याश्चायमादिमः श्लोकः—

( इन्द्रवज्रावृत्तम् )

यन्निर्जरा द्वादशधा निरुक्ता तद्द्वादशानां तपसां विभेदात् ।
हेतुप्रभेदादिह कार्यभेदः स्वातंत्र्यतस्त्वेकविधैव सा स्यात् ॥ १ ॥

व्याख्या—यन्निर्जरा द्वादशधा निरुक्ता, तत्तपसां द्वादशानां विभेदात् यत्सर्वत्रागमेषु निर्जरा देशेन कर्मपरिपाटना द्वादशधा द्वादशप्रकारा निरुक्ता व्युत्पत्तिपूर्वकं कथिता, तत्तस्या जनकहेतूनां द्वादशानां षड्बाह्यषडाभ्यंतराणां तपसां तपोविधानानां विभेदात् विशेषेण कृतो भेदो विभेदस्तस्मात्, देवदत्तस्यानशनजा यज्ञदत्तस्य ध्यानजेति विशेषणादित्यर्थः । इह प्राज्ञजने सर्वत्र । हेतुप्रभेदात् कारणविशेषणादेव । कार्यभेदो जन्ये भिन्नता दृष्टा, यथा पार्थिवो घटः, सौवर्णिको घटः । स्वातंत्र्यतस्तु निर्विशेषणकर्मपरिक्षयमात्राऽपेक्षया तु सा निर्जरैकविधैव जीवप्रदेशेभ्यः कर्मदलिकानां पृथग्भवनमात्रेव स्याजायत इत्यर्थः ॥ १ ॥

उक्तार्थमेव स्पष्टयन्नाह—

( अनुष्टुब्वृत्तद्वयम् )

काष्ठोपलादिरूपाणां निदानानां विभेदतः । वह्निर्यथैकरूपोऽपि पृथग्रूपो विवक्ष्यते ॥ २ ॥

व्याख्या–यथैकरूपोऽपि वह्निः यथेति दृष्टान्तोपन्यासाय यथा येन न्यायेन वह्निरग्निः एकरूपोऽपि सर्वोऽप्युष्णदाह-कप्रकाशकत्वादिस्वभावत्वेनैकरूपो वर्तते । तथापि काष्ठोपलादिरूपाणां काष्ठं वह्निजनकमरणिगणियार्यादि तदिन्धनानि च, उपलाः सूर्यकान्तमण्यादिपाषाणजातयः, आदिपदात्पत्रतृणगोमयादीन्धनानि ग्राह्याणि, तद्रूपाणां निदानानां हुतवहो-त्पादककारणानां विभेदतो भिन्नत्वहेतुतः पृथग्रूपो भिन्नरूपो यथायं पार्णोऽग्निः विवक्ष्यत इष्यत इत्यर्थः ॥ २ ॥

निर्जरापि द्वादशधा तपोभेदैस्तथोदिता । कर्मनिर्जरणात्मा तु सैकरूपैव वस्तुतः ॥ ३ ॥

व्याख्या–तथा तेनैव न्यायेन तपोभेदैर्निर्जरोत्पादकैर्बाह्याभ्यन्तरैस्तपसां भेदैर्नानात्वविधानैः निर्जरापि कर्मपरिपा-टनापि द्वादशधा द्वादशविधा उदिता जिनागमेऽभिहिता । तु पुनः वस्तुतः परमार्थदृष्ट्या सा प्रोक्ता निर्जरा कर्मनिर्ज-रणात्मा देशेनाघक्षपणस्वरूपा एकरूपैव निष्केवलं वा कर्म हानिः सैव सेतीत्यर्थः ॥ ३ ॥

अथ हेतुभूततपःप्रभावचमत्कृता वाचकास्तां स्तुवन्त आहुः—

( उपेन्द्रवज्रावृत्तम् )

निकाचितानामपि कर्मणां यद्गरीयसां भूधरदुर्धराणाम् ।
विभेदने वज्रमिवातितीव्रं नमोऽस्तु तस्मै तपसेऽद्भुताय ॥ ४ ॥

व्याख्या—यत्तपःशक्तिसामर्थ्यं गरीयसां महाविशालसमुन्नतशिखरभृतां ईदृशानामपि भूधरभूधराणां प्रोक्तविशेषणविशिष्टा ये भूधराः पर्वतास्तेभ्योऽपि दुर्धरा विकटा वज्रेणापि दुर्भेद्यत्वात्तेषां। निकाचितानामपि निकाचितानि गाढतरतीव्रकषायरसवशबद्धत्वादुपक्रमोपशामणापवर्तनासंक्रमणायोग्यत्वेन केवलविपाकवेद्यानि तर्हि शिथिलबद्धानां तु किं वाच्यं? तेषामपि कर्मणां ज्ञानावरणीयादीनां विच्छेदनेऽपुनर्विनाश्यत्वेन विनाशने, वज्रमिवातितीव्रं पर्वतविनाशने वज्रं सुरेशायुधं दंभोलिः वज्रं यथा पर्वतभेदे तीक्ष्णं वर्तते तथा तपोऽपि प्रोक्तकर्मभेदने वज्रादप्यतितीव्रं तीक्ष्णं वर्तते तस्मै प्रोक्तशक्तिसंपन्नाय अद्भुतायाचिन्त्यमहिम्ने तपसे तपोगुणाय नमोऽस्तु भूयो भूयो मे प्रणतिर्भवत्वित्यर्थः ॥ ४ ॥

सोदाहरणं तपःप्रभावं स्तुवन्नाह—

(उपजातिवृत्तम्)

किमुच्यते सत्तपसः प्रभावः कठोरकर्मार्जितकिल्बिषोऽपि ।
दृढप्रहारीव निहत्य पापं यतोऽपवर्गं लभतेऽचिरेण ॥ ५ ॥

व्याख्या—अहो आत्मन् सत्तपसः सतः समीचीनस्यानिराशीभावेनातिचाररहितस्य कृतस्य तपसोऽनशनध्यानादिसाधुसमाचारस्य प्रभावः सामर्थ्यं महिमा किमुच्यते किं मया वक्तुं शक्यते? नैव शक्नोमि। यतो यस्मात्तपसः प्रभावात् कठोरकर्मार्जितकिल्बिषोऽपि कठोराणि ब्रतिबालस्त्रीगोवधादीनि कर्माणि महानीचाकृत्यसमाचरणानि तैरर्जितं समुपार्जितं किल्बिषं पापकर्मराशिर्येन स तथाभूतः प्राणी सोऽप्यास्तामनीदृशः। दृढप्रहारी स इव यथासौ कृततथाविधक-

र्मापि चतुर्विधतपश्चाचरेण मोक्षं लेभे तथान्योऽपि जीवस्तपसः पापं कर्मौघं निहत्य समूलघातं विनाश्य अचिरेण स्वल्पकालेन अपवर्गं अपनष्टरागादिवर्गं मोक्षं लभते प्राप्नोतीत्यर्थः ॥ ५ ॥

पुनरप्युदाहरति—

यथा सुवर्णस्य शुचिस्वरूपं दीप्तः कृशानुः प्रकटीकरोति ।
तथात्मनः कर्मरजो निहत्य ज्योतिस्तपस्तद्विशदीकरोति ॥ ६ ॥

व्याख्या—यथा येन न्यायेन तपसः प्रभावं जानीष्व । यथा सुवर्णस्य काञ्चनस्य दीप्तः सप्रकाशप्रभावान् शुचिस्वरूपं जात्यं रूपनैर्मल्यं कृशानुरग्निः प्रकटीकरोति मलाच्छादितत्वेनाप्रकटः सन् स्पष्टं दर्शयति । तथा तेनैव न्यायेन आत्मनो जीवस्य ज्योतिः सर्वभावाविर्भावकं शुद्धचैतन्यं तपः प्रोक्तरूपं कर्मरजः कर्ममलधूलिं निहत्य विनाश्य विशदीकरोति कर्ममलाच्छादितमशुद्धं सत् मलं प्रच्छाद्य सर्वावभासयुक्तं शुद्धं करोतीत्यर्थः ॥ ६ ॥

तपोमाहात्म्यमेवाह—

( स्रग्धरावृत्तम् )

बाह्येनाभ्यन्तरेण प्रथितबहुभिदा जीयते येन शत्रुश्रेणी बाह्यान्तरंगा भरतनृपतिवद्भावलब्धद्रढिम्ना ।
यस्मात्प्रादुर्भवेयुः प्रकटितविभवा लब्धयः सिद्धयश्च वन्दे स्वर्गापवर्गार्पणपटुसततं तत्तपो विश्ववन्द्यम् ७

व्याख्या—येन प्रोक्तवक्ष्यमाणप्रभाववता तपसा प्रथितबहुभिदा प्रथिता बृहल्लघुसिंहनिःक्रीडितरत्नावलिकनकावलि-गुणरत्नसंवत्सरादिभिर्भूरिविस्तारं प्राप्ताः बहुभिदा बहवोऽतिप्रभूता भिद्यन्ते इति भिदाः । बाह्येनाभ्यन्तरेण प्राय-श्चित्तविनयादिना । बाह्याभ्यन्तरंगा बाह्या अनादेशकारकप्रतिपक्षिराजादयः, अन्तरंगा रागद्वेषकर्मरोगादयः, त एव शत्र-वोऽरयस्तेषां या श्रेणी पंक्तिः सा जीयते स्ववशवर्त्तिनी क्रियते । सा केन साधनेन जीयते इत्याह—भरतनृपतिवद्भाव-लब्धरूढिम्ना भरतः श्रीऋषभस्वामिनो ज्येष्ठपुत्रः स एव नृपतिः सकलभारतवासिजनानां स्वामी तद्वत्तद्वद्यो भाव-लब्धो भावेन शुद्धमानसिकपरिणामेन लब्धः प्राप्तो यो रूढिमा विषयसुखरागादिना चालयितुमशक्यत्वं तेन भावलब्ध-रूढिम्ना । यस्मात्प्रकटितविभवा लब्धयः सिद्धयश्च प्रादुर्भवेयुः । यस्मात्तपःप्रभावात्प्रकटितविभवाः प्रकटिताः सम्प्रकाशा जनैर्दृश्यमाना विभवाः सज्ज्ञानादिभिर्भावितनुमलवातस्पर्शमहारोगोपद्रवशान्त्यादिसंपदो यासां तादृशा लब्धय आमर्षौष-ध्यादितया निष्पन्नशक्तयः सिद्धयोऽणिमालब्धिप्रभृतयः प्रादुर्भवेयुः प्रकटा भवेयुः समुत्पद्यन्ते । स्वर्गापवर्गार्पणपटु स्वर्गो देवलोकसंपद् अपवर्गो मोक्षस्तयोरर्पणे प्रापणे जीवानामिति शेषः तस्मिन् पटु चातुर्यवत्सामर्थ्ययुक्तमिति यावत् । तत्तपो विश्ववन्द्यं तत्पूर्वोक्तमहाप्रभावयुक्तं तपोऽनशनादिरूपं विश्ववन्द्यं समग्रत्रिभुवनजनपूज्यं । सम्यक् सविनयस-माचरणीयं । सततं निरन्तरं प्रतिसमयं । वन्दे सबहुमानं प्रणतोऽस्मीत्यर्थः ॥ ३ ॥

अथ गेयपद्याष्टकेन तपोमहिमरूपां निर्जरां विभावयति—

**विभावय विनय तपोमहिमानं, ध्रुवपदं, बहुभवसञ्चितदुष्कृतममुना लभते लघु लघिमानम्; वि०॥१॥**

व्याख्या–हे विनय हे विशिष्टनिर्वृतिकामिन् चेतन त्वं तपोमहिमानं बहिरन्तस्तपसः प्रभावं प्रति चिन्तय स्वात्मनि वासय तपःपरिणतिमयो भवेति यावत्। अमुना तपसा बहुभवसञ्चितं दुष्कृतं लघुलघिमानं लभते बहुभवसञ्चितं बहुभिरनन्तसंख्येयैर्भवैः कैवर्तकमिथ्याभिमानिदेवगुरुधर्मादिमहाशातनाकारिभिर्जन्मभिः सञ्चितं समुपार्जितं दुष्कृतं पापकर्मभरं लघु शीघ्रं मुहूर्तादिमात्रविधानेऽपि लघिमानं लघोर्भावो लघिमा स्वल्पत्वमसत्त्वं वा तं लघिमानं लभते प्राप्नोतीत्यर्थः ॥ १ ॥

याति घनापि घनाघनपटली खरपवनेन विरामम्।
भजति तथा तपसा दुरितावली क्षणभंगुरपरिणामम्, वि० ॥ २ ॥

व्याख्या–घनापि घना कठिनाऽतिशयेन निबिडादपि निबिडा या सा घनापि तादृश्यपि। घनाघनपटली घनाघनो वार्षुको मेघस्तस्य पटली घटामण्डली सा। यथा खरपवनेन खरः कर्कश उग्रगतिमानिति यावत् यः पवनो वायुस्तेन विरामं शीघ्रमवसानं याति भजति। तथा तेनैव न्यायेन दुरितावली दुरितानि पापानि तेषां आवली श्रेणिः तपसा तपःसमाचारेण कृत्वा। क्षणभंगुरपरिणामं क्षणं क्षणमध्ये भंगुरा विनशनशीला तादृशं परिणामं स्वभावं भजति प्राप्नोति विनश्यतीत्यर्थः ॥ २ ॥

वाञ्छितमाकर्षति दूरादपि रिपुमपि भजति वयस्यम्।
तप इदमाश्रय निर्मलभावादागमपरमरहस्यम्, वि० ॥ ३ ॥

व्याख्या—हे चेतन इदं प्रत्यक्षं शिवार्थिभिः क्रियमाणं दृश्यते । तपः प्रोक्तरूपं । वाञ्छितं स्वस्याभीष्टं स्वर्गमोक्षसुखादिकं । दूरादपि प्रभूततमकालकर्तव्यादिव्यवधानाद्भावि अपि कार्यं । आकर्षति सुलभसमीपानायासप्राप्यं करोति । तथा रिपुमपि वैरिणं जनमपि । वयस्यं मित्रभावं व्रजति समुत्पादयति । तथा आगमपरमरहस्यं आगमस्य जिनप्रवचनस्य परममुत्कृष्टरूपं रहस्यं सारः वर्तते । तत इदं तपो निर्मलभावात् शुद्धनिराशिस्वभावात् आश्रय समाचरेत्यर्थः ॥ ३ ॥

तपसो भेदानाह—

अनशनमूनोदरतां वृत्तिह्रासं रसपरिहारम् । भज सांलीन्यं कायक्लेशं तप इति बाह्यमुदारम्, वि० ॥ ४ ॥

व्याख्या—अनशनं न विद्यतेऽशनं भोजनं यस्मिन् तपसि तत्तथा चतुर्थादारभ्य षण्मास्यवसानं तत् १ । ऊनोदरतां ऊनमपरिपूर्णमुदरं भोजनमात्रया यत्र तस्य भावस्तत्ता तां २ । वृत्तिह्रासं वृत्तिराजीविका स्वेहा भोगोपभोगोपयोगिवस्तुविषया तस्या ह्रासः परिमाणेन संक्षेपो यत्र तत्तथा ३ । रसपरिहारं रसा घृतादिषड्विकृतयः तेषां परिहारः प्रतिदिनमेकद्व्यादिरीत्या सर्वथा त्यजनं वा यत्र तत् ४ । सांलीन्यं संलीनं हस्ताद्यंगावयवानां प्रयोजनाभावे संवरणं तद्भावः कर्म वा सांलीन्यं ५ । कायक्लेशं कायो देहस्तस्य क्लेश आभ्युपगमकैः खेदोत्पादकवीरासनाद्यासनकेशलुञ्चनातापनादिभिर्यत्र विधीयते तत् ६ । इत्यनन्तरोक्तभेदैर्भिन्नं उदारं आशंसादिसर्वदोषवर्जितं बाह्यं मिथ्यादृष्टिभिरपि क्रियमाणत्वेन क्रियमाणं चर्मचक्षुर्भिर्दृश्यमानत्वेन बाह्यमौदारिकशरीरशोषकत्वेन च बहिर्भवं तपः प्रोक्तरूपं त्वं भज सेवस्वेत्यर्थः ॥ ४ ॥

प्रायश्चित्तं वैयावृत्त्यं स्वाध्यायं विनयं च । कायोत्सर्गं शुभ्रध्यानं आभ्यन्तरमिदमं च, वि० ॥ ५ ॥

व्याख्या—प्रायश्चित्तं दोषातिचारमलशोधकमालोचनादि दशविधं १ । वैयावृत्त्यं आचार्यादिदशविधपुंसां योग्यं शुद्धमानाहारवस्त्रपात्रादिसंपादनरूपदशविधं २ । स्वाध्यायं वाचनादानग्रहणादि पञ्चभेदं ३ । विनयं ज्ञानदर्शनादि सप्तविधं ४ । चः पादपूरणे । कायोत्सर्गोऽशुद्धाहारवस्त्रपात्रशरीरचेष्टादेर्व्युत्सर्जनं ५ । शुद्धमात्मशुद्धिकरं ध्यानं धर्मशुक्लरूपं ६ । इदमं चोक्तरूपं आभ्यन्तरं चर्मदगदृश्यं निर्जराफलदं कार्मणशरीरदाहकं जैनशासने सम्यग्दृष्टिभिरेव क्रियमाणत्वादन्तरंगं तपो भजस्वेत्यर्थः ॥ ५ ॥

उक्ततपसः फलं दर्शयति—

शमयति तापं गमयति पापं रमयति मानसहंसम् ।
हरति विमोहं दूरारोहं तप इति विगताशंसम्, वि० ॥ ६ ॥

व्याख्या—हे आत्मन् त्वं इत्येवं वक्ष्यमाणरूपं विगताशंसं विशेषेण गता नष्टा आशंसा इहलोकपरलोकसुखादेरभिलापो यस्मात्तत्तथाविधं तपः कुरु । तेन च तत्तपस्तवान्यस्य च तापं सर्वसंक्लेशं शमयति शान्तिभावं नयति । पापं पूर्वकृताघराशिं गमयति विनाशयति । मानसहंसं मनोमरालं रमयति शुद्धात्मस्वरूपपंकजवने सानन्दविलासप्रापणेन क्रीडयति खेलापयति । दूरारोहं विमोहं हरति दूरेण प्रबलतरप्रयत्नलब्धेन सामर्थ्येनारुह्य उल्लंघ्यते यः स दूरारोहस्तं विमोहं सम्यक्त्वादिघाते समर्थो मोहोऽनन्तानुबन्धिकषायमिथ्यात्वमोहनीयरूपो विमोहस्तं हरति हुताशनकाष्ठनिकरवद्भस्मीभावं करोतीत्यर्थः ६

संयमकमलाकार्मणमुज्ज्वलशिवसुखसत्यंकारम् ।
चिन्तितचिन्तामणिमाराधय तप इह वारंवारम्, वि० ॥ ७ ॥

व्याख्या—हे चेतन इह जिनशासने प्राप्तप्रवेशे सति संयमकमलाकार्मणं संयम इन्द्रियनोइन्द्रियरोधविधिः स एव कमला संपद्विस्तरस्तस्याः कार्मणं वशीकारकारणं मंत्रौषधिरूपं । उज्ज्वलशिवसुखसत्यंकारं उज्ज्वलं आकांक्षौत्सुक्यादिदोषवर्जितत्वेन निर्मलमीदृशं यत् शिवसुखं मोक्षगतानन्दः तस्य सत्यंकारं व्यापारप्रतिज्ञायै हस्तार्पणं । चिन्तितचिन्तामणिं चिन्तितमात्रस्येष्टवस्तुनः प्रापणे चिन्तामणिं चिन्तामणिरत्नं वर्तते । तत्तपो वारंवारं भूयो भूय आराधय सम्यक् पालयेत्यर्थः ॥ ७ ॥

कर्मगदौषधमिदमिदमस्य च जिनपतिमतमनुपानम् ।
विनय समाचर सौख्यनिधानं शान्तिसुधारसपानम्, वि० ॥ ८ ॥

॥ इति श्रीशान्तसुधारसगेयकाव्ये निर्जराभावनाविभावनो नाम नवमः प्रकाशः ॥

व्याख्या—हे विनय इदं प्रत्यक्षं तपः प्रोक्तस्वरूपं कर्मगदौषधं कर्माणि पूर्वोक्तानि तान्येव गदाः कुष्ठादिमहाक्षेत्ररोगास्तेषां विनाशनाय औषधं रसायनादिशमनीयं वर्तते । अस्य चानुपानं औषधोपरि पश्चात् पेयं पथ्यभोजनं जिनपतिमतं श्रीमदर्हत्प्रणीतागमज्ञानकरणं श्रीआरोग्यवर्धकं वर्तते । तथा इदं तपःसमाचरणमेव सौख्यनिधानं सुखस्य भावः सौख्यं

प्रायश्चित्तं वैयावृत्त्यं स्वाध्यायं विनयं च । कायोत्सर्गं शुभध्यानं आभ्यन्तरमिदमं च, वि० ॥ ५ ॥

व्याख्या—प्रायश्चित्तं दोषातिचारमलशोधकमालोचनादि दशविधं १ । वैयावृत्त्यं आचार्यादिदशविधपुंसां योग्यं शुद्धमानाहारवस्त्रपात्रादिसंपादनरूपदशविधं २ । स्वाध्यायं वाचनादानग्रहणादि पञ्चभेदं ३ । विनयं ज्ञानदर्शनादि सप्तविधं ४ । चः पादपूरणे । कायोत्सर्गोऽशुद्धाहारवस्त्रपात्रशरीरचेष्टादेर्व्युत्सर्जनं ५ । शुद्धमात्मशुद्धिकरं ध्यानं धर्मशुक्लरूपं ६ । इदमं चोक्तरूपं आभ्यन्तरं चर्मदृगदृश्यं निर्जराफलदं कार्मणशरीरदाहकं जैनशासने सम्यग्दृष्टिभिरेव क्रियमाणत्वादन्तरंगं तपो भजस्वेत्यर्थः ॥ ५ ॥

उक्ततपसः फलं दर्शयति—

शमयति तापं गमयति पापं रमयति मानसहंसम् ।
हरति विमोहं दूरारोहं तप इति विगताशंसम्, वि० ॥ ६ ॥

व्याख्या—हे आत्मन् त्वं इत्येवं वक्ष्यमाणरूपं विगताशंसं विशेषेण गता नष्टा आशंसा इहलोकपरलोकसुखादेरभिलाषो यस्मात्तत्तथाविधं तपः कुरु । तेन च तत्तपस्तवान्यस्य च तापं सर्वसंक्लेशं शमयति शान्तिभावं नयति । पापं पूर्वकृताघराशिं गमयति विनाशयति । मानसहंसं मनोमरालं रमयति शुद्धात्मस्वरूपपंकजवने सानन्दविलासप्रापणेन क्रीडयति खेलापयति । दूरारोहं विमोहं हरति दूरेण प्रबलतरप्रयत्नलब्धेन सामर्थ्येनारुह्य लङ्घ्यते यः स दूरारोहस्तं विमोहं सम्यक्त्वादिघाते समर्थो मोहोऽनन्तानुबन्धिकषायमिथ्यात्वमोहनीयरूपो विमोहस्तं हरति हुताशनकाष्ठनिकरवद्भस्मीभावं करोतीत्यर्थः ६

संयमकमलाकार्मणमुज्ज्वलशिवसुखसत्यंकारम् ।
चिन्तितचिन्तामणिमाराधय तप इह वारंवारम्, वि० ॥ ७ ॥

व्याख्या—हे चेतन इह जिनशासने प्राप्तप्रवेशे सति संयमकमलाकार्मणं संयम इन्द्रियनोइन्द्रियरोधविधिः स एव कमला संपद्विस्तरस्तस्याः कार्मणं वशीकारकारणं मंत्रौषधिरूपं । उज्ज्वलशिवसुखसत्यंकारं उज्ज्वलं आकांक्षौत्सुक्यादिदोषवर्जितत्वेन निर्मलमीदृशं यत् शिवसुखं मोक्षगतानन्दः तस्य सत्यंकारं व्यापारप्रतिज्ञायै हस्तार्पणं । चिन्तितचिन्तामणिं चिन्तितमात्रस्येष्टवस्तुनः प्रापणे चिन्तामणिं चिन्तामणिरत्नं वर्तते । तत्तपो वारंवारं भूयो भूय आराधय सम्यक् पालयेत्यर्थः ॥ ७ ॥

कर्मगदौषधमिदमिदमस्य च जिनपतिमतमनुपानम् ।
विनय समाचर सौख्यनिधानं शान्तिसुधारसपानम्, वि० ॥ ८ ॥

॥ इति श्रीशान्तसुधारसगेयकाव्ये निर्जराभावनाविभावनो नाम नवमः प्रकाशः ॥

व्याख्या—हे विनय इदं प्रत्यक्षं तपः मोक्षस्वरूपं कर्मगदौषधं कर्माणि पूर्वोक्तानि तान्येव गदाः कुष्ठादिमहाक्षेत्ररोगास्तेषां विनाशनाय औषधं रसायनादिशमनीयं वर्तते । अस्य चानुपानं औषधोपरि पश्चात् पेयं पथ्यभोजनं जिनपतिमतं श्रीमदर्हत्प्रणीतागमज्ञानकरणं शीघ्रारोग्यवर्धकं वर्तते । तथा इदं तपःसमाचरणमेव सौख्यनिधानं सुखस्य भावः सौख्यं

तस्य निधानं चांगागाररूपं शान्तसुधारसपानं पूर्वोक्तस्वरूपं चेदमेव वर्तते अत इदमेव समाचर सम्यग्विधिपूर्वकं कुर्वित्यर्थः ॥ ८ ॥

॥ इति श्रीतपागच्छीयसंविग्नशाखीयपरममुनिश्रीवृद्धिविजयमुख्यशिष्यश्रीमुक्तिविजयगणिसतीर्थ्यतिलकमुनिश्रीवृद्धिविजयचरणयुगसेविना पंन्यासगंभीरविजयगणिना विरचितायां श्रीशान्तसुधारसटीकायां निर्जराभावनाविभावनो नाम नवमः प्रकाशः समजनि ॥

## ॥ दशमः प्रकाशः ॥

उक्तो नवमः प्रकाशः । तत्र च कर्मरोगौषधस्यानुपानं जिनागमज्ञानमुपदिष्टं । जिनागमे च धर्मस्वाख्याततास्तीत्यनेन संबन्धेनायातां दशमे धर्मस्वाख्याततामावनां विभावयन्नाह—

( उपजातिवृत्तम् )

दानं च शीलं च तपश्च भावो धर्मश्चतुर्धा जिनबान्धवेन ।
निरूपितो यो जगतां हिताय स मानसे मे रमतामजस्रम् ॥ १ ॥

व्याख्या—जिनबान्धवेन जयति रागादीनिति जिनस्तीर्थंकरः स एव सर्वहितवत्सलत्वेन बान्धवः सुखसंपादकः, जातावेकवचनं, तेन । दानं च दातव्यबुद्ध्या धनादेर्मूर्छापरिहारः । शीलं च शुद्धब्रह्मचर्यपालनेन स्त्रीविषयपञ्चकाभिलाषत्यजनं । तपश्चतुर्थषष्ठादिविधानतो देहममत्ववर्जनं । भावश्च सत्परिणामपूर्वकसर्वव्रताचारपरिपालनेनाभिनवबन्धनिवृत्तिपुराणकर्मक्षपणतः स्वस्वरूपप्रापणं । चकाराः स्वगतानेकभेदज्ञापकाः । चतुर्धा चतुःप्रकारो धर्मः स्वभावसाधको हेतुरूपो निरूपितो मुमुक्षूणां हिताय प्रदर्शितः । स कः ? यो धर्मो जगतां त्रिभुवनोदरवर्तिप्राणिनां हिताय कल्याणाय सर्वकालं प्रवर्तते । स मोक्षरूपो मे मानसे मम हृदये । अजस्रं निरन्तरमहर्निशं रमतां सविलासं निवासं विधत्तामित्यर्थः ॥ १ ॥

तत्र भावधर्मभेदानाह—

( इन्द्रवज्रावृत्तत्रयम् )

सत्यक्षमामार्दवशौचसंगत्यागार्जवब्रह्मविमुक्तियुक्तः ।
यः संयमः किं च तपोऽवगूढश्चारित्रधर्मो दशधायमुक्तः ॥ १ ॥

व्याख्या—सत्यं सर्वासत्यपरिहरणं, क्षमा क्रोधवर्जनं, मार्दवं मानदशापरिहारः, शौचं चतुर्विधादत्तमलपरिहारेण निर्लेपव्रतधरणं, संगत्यागः धर्मोपकरणं विहाय सर्वधनादिसंयोगत्यागेनाकिंचनतावृत्तिः, आर्जवं मायिकभावं परिहृत्य ऋजुपरिणत्या वर्तनं, ब्रह्म शीलव्रतं, विमुक्तिः विशेषलोभत्यागेन संतोषयुक्तः, यः संयमः यः षड्जीवनिकायसंरक्षणव्यापारः सः । किं च संतोषयुक्तोऽपि तपोऽवगूढः नानाविधतपोभिः संयुक्तः च पूर्वोक्तः समग्रोऽप्ययं दशधा दशविधः चारित्रधर्मो देशतः सर्वतो विरतिधर्म उक्तो जिनैः कथित इत्यर्थः ॥ १ ॥

श्लोकद्वयेनास्य धर्मस्य प्रभावाः प्रोच्यन्ते—

यस्य प्रभावादिह पुष्पदन्तौ विश्वोपकाराय सदोदयेते ।
ग्रीष्मोष्मभीष्मामुदितस्तडित्वान्काले समाश्वासयति क्षितिं च ॥ २ ॥

व्याख्या—इह विश्वे यस्य प्रोक्तरूपस्य धर्मस्य प्रभावात् अचिन्त्यमहिम्नः सकाशात् पुष्पदन्तौ चन्द्रसूर्यौ द्वावपि विश्वोपकाराय धर्मिजननिवाससामर्थ्याज्जगज्जनानां सुखसंपत्कृते सदोदयेते सदा प्रतिदिनमनादित उदयेते समुद्गच्छतः। च पुनः यस्य प्रभावात् ग्रीष्मोष्मभीष्मां ग्रीष्मो निदाघसमयस्तस्माज्जातो य ऊष्मा संतापभरस्तेन भीष्मा जनानां संत्रासोत्पादिका तां क्षितिं महीमंकुरं काले तदनन्तरभाविनि प्रावृषि उदितः सर्वत्र गगनमंडलव्यापी तमित्वान् सगर्जितो विद्युत्वान्मेघः समाश्वासयति समतिशयेन निवृत्तघर्मां विदधातीत्यर्थः ॥ ३ ॥

उल्लोलकल्लोलकलाविलासैर्नाप्लावयत्यंबुनिधिः क्षितिं यत् ।
न घ्नन्ति यद्व्याघ्रमरुद्दवाद्या धर्मस्य सर्वोऽप्यनुभाव एषः ॥ ४ ॥

व्याख्या—तथा यत् उल्लोलकल्लोलकलाविलासैः उत्प्राबल्येन लोलाश्चपला ये कल्लोला ऊर्मिसमूहास्तेषां याः कला विभूतिसामर्थ्यविशेषास्तेषां ये विलासाश्चतुर्दिक्षु सवेगप्रधावनसमुच्छलनप्रसरणादयस्तैः। अंबुनिधिः समुद्रो यत् क्षितिं पृथिवीं न प्लावयति जलप्रवाहैः स्वोदरमध्ये नाकर्षति। तथा यच्च व्याघ्रमरुद्दवाद्या न घ्नन्ति व्याघ्रः सिंहः, मरुद्वातो देयश्च, दवो वनानलः, आदिपदात्सर्पनदीप्रभृतयो ग्राह्याः, एते न घ्नन्ति जनवृन्दं न विनाशयन्ति। एष श्लोकद्वयेनोक्तः सर्वोऽपि समग्रोऽपि धर्मस्य अनन्तरप्रोक्तस्य अनुभावः सामर्थ्यं महिमास्तीति जानीहीत्यर्थः ॥ ४ ॥

धर्मसौजन्यं प्रख्यापयति—

( शार्दूलविक्रीडितं वृत्तम् )

यस्मिन्नेव पिता हिताय यतते भ्राता च माता सुतः सैन्यं दैन्यमुपैति चापचपलं यत्राफलं दोर्बलम् ।
तस्मिन् कष्टदशाविपाकसमये धर्मस्तु संवर्मितः सज्जः सज्जन एष सर्वजगतस्त्राणाय बद्धोद्यमः ॥ ५ ॥

व्याख्या—यस्मिन् कष्टदशाविपाकसमये हे आत्मन् धर्मस्य सौजन्यं पश्य । यत् यस्मिन् वक्ष्यमाणस्वरूपे कष्टदशाविपाकसमये कष्टानि नानाविपत्फलदानस्वभावमयानि पञ्चविधान्तरायासातवेदनीयायशःकीर्तिनीचैर्गोत्रप्रभृतीनि कर्माणि तेषां दशा तदुदयमुख्यावस्था तद्विपाको महाकुष्टरसभृत्साक्षात्तीव्रस्वफलप्रदानं तद्रूपो यः समयोऽवसरस्तस्मिन् । कीदृग्रूपे ? यस्मिन् आस्तामन्यः । चकारः सर्वत्राप्यर्थेन संबध्यते । पिता जनकोऽपि, भ्राता सहोदरोऽपि, माता जनन्यपि, सुतः पुत्रोऽपि, अहिताय स्वस्य शरीरधनादिविनाशकष्टभरमापणाय यतते प्रयत्नपूर्वकोद्यमं कुरुते यस्मिन्नपि । सैन्यं यदि स्वयं राजादिस्तदा यस्मिन् युद्धादिके सैन्यं हस्त्यादिबलमपि दैन्यं हतोत्साहशक्त्युद्यमत्वेन दीनभावमुपैति प्राप्नोति अस्मिन्नपि । तथा यत्र यस्मिन् चापचपलं धनुर्यष्टिवच्चपलं चलाचलपतितोन्नतनम्रं दोर्बलं भुजविक्रमं अफलं निष्फलं कार्यनिष्पादनसामर्थ्यविकलं । तस्मिन्नपि समये एष पूर्वोदितो धर्मः सत्यादिरूपः । तुशब्दोऽप्यर्थे । स चैवार्थे । स एव सज्जनो जगन्मित्रं सर्वजगत्त्राणाय सर्वस्मिन्नपि जगति भुवनत्रये स्वाश्रितानां जनानां त्राणाय रक्षणपालनकृते संवर्मितः

सज्जः संयमितो धृतधैर्यादिकवच उत्पादितधृतिसंभृतजयस्वभावः सज्जः क्षमासत्यवैराग्यार्जवमार्दवसंतोषादिप्रहरण-वृन्दैः प्रगुणो बद्धोद्यमः तदापि स्वीकृतप्रौढपराक्रमो जागर्तीत्यर्थः ॥ ५ ॥

अथ धर्मसंपदो नमस्कुर्वन्नाह—

त्रैलोक्यं सचराचरं विजयते यस्य प्रसादादिदं योऽत्रामुत्र हितावहस्तनुभृतां सर्वार्थसिद्धिप्रदः ।
येनानर्थकदर्थना निजमहःसामर्थ्यतो व्यर्थिता तस्मै कारुणिकाय धर्मविभवे भक्तिप्रणामोऽस्तु मे ॥ ६ ॥

व्याख्या—यस्य धर्मविभवस्य प्रसादात् नैर्मल्यप्रसक्तिकृपोपकारात् सचराचरं जंगमस्थावरसमन्वितं इदं सर्वस्य स्वानुभवादिगम्यं त्रैलोक्यं त्रयो लोकाः समाहृता यस्मिन् तत् त्रैलोक्यं स्वर्गादि विजयते सुखादिप्रौढतां लभते । तथा यो धर्मविभवः तनुभृतां देहिनां अत्रामुत्र वर्तमानभवे भवान्तरे च हितावहो हितसुखप्रापकः सन् सर्वार्थसिद्धिप्रदः सर्वेषां कार्याणां स्वर्गमोक्षप्रभृतीनां सिद्धिर्निष्पत्तिस्तां प्रददातीति सर्वार्थसिद्धिप्रापकोऽस्ति । तथा येन धर्मविभवेन निज-महस्सामर्थ्यतो निजं स्वकीयं महः प्रतापः प्रभावो वा तद्रूपं यत्सामर्थ्यं शक्तिस्तेन स्वाश्रितजीवानां अनर्थकदर्थना न श्रेयांसि अनर्थाः प्राणिनां वैरविरोधानिष्टादिभावास्तैः कृता या कदर्थना विडंबनासमूहः सा व्यर्थिता निरसनेन निष्फलीकृता । तस्मै प्रोक्तरूपाय कारुणिकाय करुणापूरितस्वरूपाय धर्मविभवे धर्मैश्वर्याय मे मम भक्तिप्रणामोऽस्तु भक्त्या कृतः प्रणामः प्रणतिर्भवत्वित्यर्थः ॥ ६ ॥

अथ धर्मं कल्पवृक्षोपमानेन स्तौति—

(मन्दाक्रान्तावृत्तम्)

प्राज्यं राज्यं सुभगदयिता नन्दना नन्दनानां रम्यं रूपं सरसकविताचातुरी सुस्वरत्वम् ।
नीरोगत्वं गुणपरिचयः सज्जनत्वं सुबुद्धिं किंनु ब्रूमः फलपरिणतिं धर्मकल्पद्रुमस्य ॥ ७ ॥

व्याख्या—नु वितर्के । धर्मकल्पद्रुमस्य फलपरिणतिं किं नु ब्रूमः प्रोक्तरूपधर्म एव कल्पद्रुमः सुरपादपः तस्य संबन्धिनीं फलपरिणतिं फलपरिपाकरूपां श्रेणिं वयं किं नु ब्रूमः ? कियज्जल्पामः ? कथयितुं न शक्नुमः, अतिप्रभूतत्वादितरकल्पवृक्षफलश्रेण्येकविधैव श्रूयते धर्मरूपस्य कल्पवृक्षस्य त्वनेकविधत्वेनानुभूयमानत्वादिति यावत् । तदाह—यतो धर्माद्राज्यं चक्रवर्तित्वादि प्राज्यं प्रौढमेकछत्रं जायते । सुभगदयिता सुभगा सौभाग्यभूषितेष्टा दयिता वल्लभा स्त्री भवति । नन्दनानां पुत्राणामपि नन्दनाः पुत्रा भवन्ति । रूपं शरीरसौन्दर्यं रम्यं जननयनरमणीयं प्राप्यते । सरसकविताचातुरी सरसा माधुर्यचमत्कारोत्पादिका कविता कवित्वकलानैपुण्यं जायते । सुस्वरत्वं कोकिलारुताधःकारी मधुरध्वनिर्भवति । नीरोगत्वं रोगरहितत्वं संपद्यते । गुणपरिचयो गुणानां गाम्भीर्यौदार्यशौर्यादीनां परिचयः सर्वतो वृद्धिः । सज्जनत्वं जगन्मैत्रत्वं । सुबुद्धिं सन्मतिं लभत इत्यर्थः ॥ ७ ॥

अथ धर्मस्वाख्यातभावनां गेयपद्याष्टकेन विभावयन्नाह—

पालय पालय रे पालय मां जिनधर्म ।

**मंगलकमलाकेलिनिकेतन करुणाकेतन धीर। शिवसुखसाधन भवभयबाधन जगदाधार गंभीर, पा०॥१॥**

व्याख्या—हे जिनधर्म जिनैरर्हद्भिश्चतुर्ज्ञानवद्भिस्तद्भवेऽवश्यं सिद्धितव्यं जानद्भिः स्वयं समाचरितः समाचरणाच्च सर्वज्ञः सर्वदर्शी च भूत्वा सर्वांगैर्वेदितः परोपकाराय प्रख्यापितो धर्मो जिनधर्मः तत्संबोधनं हे जिनधर्म। हे मंगलकमलाकेलिनिकेतन मंगलानि स्वेष्टप्राप्तिहेतवो महोत्सवाश्च तद्रूपा या कमला महालक्ष्मीस्तस्या याः केलयः सुखविलासास्तासां निकेतनं क्रीडासद्म तत्संबोधनं। हे करुणाकेतन करुणा सर्वस्य सर्वापद्भ्यः समुद्धरणं सा केतनं लक्ष्मं स्वरूपं चेति यावत् यस्य तत्संबोधनं हे करुणास्वरूप। हे धीर हे अविचलितैकपरोपकाररूप। हे शिवसुखसाधन हे मोक्षमहानन्दनिष्पादनप्रवीण। हे भवभयबाधन हे जन्मजरामरणदुर्गत्यादिभीतिनिवारण। हे जगदाधार हे त्रिभुवनवासिजनानां शरणागतवत्सल। हे गंभीर हे अगाधमहिमसागर। मां स्वसेवकं पालय पालय पालय रक्ष समुद्धर मोक्षमन्दिरं प्रापयेत्यर्थः॥१॥

**सिञ्चति पयसा जलधरपटली भूतलममृतमयेन। सूर्याचन्द्रमसावुदयेते तव महिमातिशयेन, पा० ॥२॥**

व्याख्या—हे श्रीजिनधर्म तव भवतो महिमातिशयेन सर्वातिशायिप्रभावेण। जलधरपटली समुन्नतमेघमंडली। अमृतमयेन एकेन्द्रियादिसर्वस्य सञ्जीवनतादायिमधुररसमयेन पयसा जलेन कृत्वा। भूतलं पृथ्वीमंडलं। सिञ्चति जलप्रवाहेण बीजोद्गमादियोग्यत्वेन सरसं करोति। तथा सूर्याचन्द्रमसौ जगच्चक्षुर्भूतौ रविविधू उदयेते प्रतिदिनमुद्गच्छतः। अत्र सूर्याचन्द्रमसावुदयेते इति प्रोक्तं। प्रागपि तृतीयश्लोके भावनायामप्युक्तं "यस्य प्रभावात्पुष्पदन्तौ विश्वोपकाराय सदोदयेते" इति, तथाप्यत्र पुनरुक्तदोषो न, क्रमेणोपदेशस्तुतिरूपाभ्यामुक्तत्वादित्यर्थः ॥ २ ॥

अथ धर्मं कल्पवृक्षोपमानेन स्तौति—

( मन्दाक्रान्तावृत्तम् )

प्राज्यं राज्यं सुभगदयिता नन्दना नन्दनानां रम्यं रूपं सरसकविताचातुरी सुस्वरत्वम् ।
नीरोगत्वं गुणपरिचयः सज्जनत्वं सुबुद्धिं किंनु ब्रूमः फलपरिणतिं धर्मकल्पद्रुमस्य ॥ ७ ॥

व्याख्या—नु वितर्के । धर्मकल्पद्रुमस्य फलपरिणतिं किं नु ब्रूमः प्रोक्तरूपधर्म एव कल्पद्रुमः सुरपादपः तस्य संबन्धिनीं फलपरिणतिं फलपरिपाकरूपां श्रेणिं वयं किं नु ब्रूमः ? कियज्जल्पामः ? कथयितुं न शक्नुमः, अतिप्रभूतत्वादितरकल्पवृक्षफलश्रेण्येकविधैव श्रूयते धर्मरूपस्य कल्पवृक्षस्य त्वनेकविधत्वेनानुभूयमानत्वादिति यावत् । तथाह—यतो धर्माद्राज्यं चक्रवर्तित्वादि प्राज्यं प्रौढमेकछत्रं जायते । सुभगदयिता सुभगा सौभाग्यभूषितेष्टा दयिता वल्लभा स्त्री भवति । नन्दनानां पुत्राणामपि नन्दनाः पुत्रा भवन्ति । रूपं शरीरसौन्दर्यं रम्यं जननयनरमणीयं प्राप्यते । सरसकविताचातुरी सरसा माधुर्यचमत्कारोत्पादिका कविता कवित्वकलानैपुण्यं जायते । सुस्वरत्वं कोकिलारुताधःकारी मधुरध्वनिर्भवति । नीरोगत्वं रोगरहितत्वं संपद्यते । गुणपरिचयो गुणानां गाम्भीर्यौदार्यशौर्यादीनां परिचयः सर्वतो वृद्धिः । सज्जनत्वं जगन्मैत्रत्वं । सुबुद्धिं सन्मतिं लभत इत्यर्थः ॥ ७ ॥

अथ धर्मस्वाख्यातभावनां गेयपद्याष्टकेन विभावयन्नाह—

पालय पालय रे पालय मां जिनधर्म ।

**मंगलकमलाकेलिनिकेतन करुणाकेतन धीर। शिवसुखसाधन भवभयबाधन जगदाधार गंभीर, पा०॥१॥**

व्याख्या–हे जिनधर्म जिनैरर्हद्भिश्चतुर्ज्ञानवद्भिस्तद्भवेऽवश्यं सिद्धितव्यं जानद्भिः स्वयं समाचरितः समाचरणाच्च सर्वज्ञः सर्वदर्शी च भूत्वा सर्वांगैर्वेदितः परोपकाराय प्रख्यापितो धर्मो जिनधर्मः तत्संबोधनं हे जिनधर्म। हे मंगलकमलाकेलिनिकेतन मंगलानि स्वेष्टप्राप्तिहेतवो महोत्सवाश्च तद्रूपा या कमला महालक्ष्मीस्तस्या याः केलयः सुखविलासास्तासां निकेतनं क्रीडासद्म तत्संबोधनं। हे करुणाकेतन करुणा सर्वस्य सर्वापद्भ्यः समुद्धरणं सा केतनं लक्षणं स्वरूपं चेति यावत् यस्य तत्संबोधनं हे करुणास्वरूप। हे धीर हे अविचलितैकपरोपकाररूप। हे शिवसुखसाधन हे मोक्षमहानन्दनिष्पादनप्रवीण। हे भवभयबाधन हे जन्मजरामरणदुर्गत्यादिभीतिनिवारण। हे जगदाधार हे त्रिभुवनवासिजनानां शरणागतवत्सल। हे गंभीर हे अगाधमहिमसागर। मां स्वसेवकं पालय पालय पालय रक्ष समुद्धर मोक्षमन्दिरं प्रापयेत्यर्थः॥१॥

**सिञ्चति पयसा जलधरपटली भूतलममृतमयेन। सूर्याचन्द्रमसावुदयेते तव महिमातिशयेन, पा० ॥२॥**

व्याख्या–हे श्रीजिनधर्म तव भवतो महिमातिशयेन सर्वातिशायिप्रभावेण। जलधरपटली समुन्नतमेघमंडली। अमृतमयेन एकेन्द्रियादिसर्वस्य सञ्जीवनतादायिमधुररसमयेन पयसा जलेन कृत्वा। भूतलं पृथ्वीमंडलं। सिञ्चति जलप्रवाहेण बीजोद्गमादियोग्यत्वेन सरसं करोति। तथा सूर्याचन्द्रमसौ जगच्चक्षुर्भूतौ रविविधू उदयेते प्रतिदिनमुद्गच्छतः। अत्र सूर्याचन्द्रमसावुदयेते इति प्रोक्तं। प्रागपि तृतीयश्लोके भावनायामप्युक्तं "यस्य प्रभावात्पुष्पदन्तौ विश्वोपकाराय सदोदयेते" इति, तथाप्यत्र पुनरुक्तदोषो न, क्रमेणोपदेशस्तुतिरूपाभ्यामुक्तत्वादित्यर्थः ॥ २ ॥

**निरालंबनियमसदाधारा तिष्ठति वसुधा येन । तं विश्वस्थितिमूलस्तंभं तं सेवे विनयेन, पा० ॥३॥**

व्याख्या–येन धर्ममहिम्ना । इयं सचराचरपदार्थसार्थैः प्रत्यक्षा । वसुधा पृथिवी । असदाधारा असन् अविद्यमान आधारोऽधस्तात्संजाघाश्रयो यस्याः सा तथा अधस्ताद्धारकेण रहितेति यावत् । निरालंबं निर्गतो नैवास्ति आलंब उपरिष्टान्नियमरज्ज्वादिसमाकर्षको यत्र तन्निरालंबं यथा स्यात्तथा तिष्ठति गगनमात्रस्था वर्तते, न शेषनागेन धृता, नैव सूर्येण समाकर्षिता, तथा स्वीकारेऽनवस्थादिदोषा दुर्निवारा भवेयुः । यथा शेषस्य क आधारः सूर्यस्य च कः समाकर्षकः ? इत्याद्यन्ते गगनस्थैवापततीति यावत् । अतस्तमनादितः सर्वकालं यावत् । विश्वस्थितिमूलस्तंभं समग्रत्रैलोक्यमर्यादाया मूलस्तंभः स्थितिप्रतिष्ठास्थैर्यादिस्थूणा तं धर्मप्रभावं स्वीकुरु । तं धर्मं विनयेन कार्यान्तरवर्जनैकाग्र्येण प्रणतिपुरस्सरं सेवेऽहमित्यर्थः ॥ ३ ॥

**दानशीलशुभभावतपोमुखचरितार्थीकृतलोकः । शरणस्मरणकृतामिह भविनां दूरीकृतभयशोकः, पा० ॥४॥**

व्याख्या–दानशीलशुभभावतपोमुखचरितार्थीकृतलोकः दानादिप्रकारैः कृतार्थीकृता लोका येन स तथा । शरणस्मरणकृतां भविनां धर्मस्य शरणस्मरणकारिणां भव्यानां । येन इह विद्यमानभवेऽपि । दूरीकृतभयशोकः दूरीकृता अभावं प्रापिता भयानि सप्तविधानि शोका इष्टवियोगादिजा येन स तथेत्यर्थः ॥ ४ ॥

**क्षमासत्यसंतोषदयादिकसुभगसकलपरिवारः । देवासुरनरपूजितशासनकृतबहुभवपरिहारः, पा० ॥५॥**

व्याख्या—यस्य जिनधर्मस्य क्षमादिदशप्रकाररूपो जननीजनकादिरूपश्चजनप्रसिद्धो दयादिकः करुणौदार्यशौर्यधैर्यादिरूपश्च सुजगः सकलजगज्जनेष्टः सकलपरिवारः समग्रोऽपि स्वजनवर्गप्रकारो वर्तते स तथा । देवासुरनरपूजितशासन देवा वैमानिकज्योतिष्काः, असुरा भवनपतिव्यन्तराः, नरा विद्याधरचक्रवर्तिवासुदेवादिमनुष्यास्तैः पूजितं बहुमानपुरस्सरं स्वीकृतं शासनमाज्ञा यस्य धर्मस्य तस्य संबोधनं एवं सर्वत्र तस्मात्तेषां कृतबहुभवपरिहारः कृतं रचितं बहूनामसंख्येयानन्तादित्वेनापरिमितानां भवानां जन्मपरंपराणां परिहारोऽभावो येन स तथेत्यर्थः ॥ ५ ॥

बन्धुरबन्धुजनस्य दिवानिशमसहायस्य सहायः। भ्राम्यति भीमे भवगहनेऽङ्गी त्वां बान्धवमपहाय, पा०६

व्याख्या—हे श्रीजिनधर्म त्वं अबन्धुजनस्य बन्धुः न विद्यते बन्धुः सहोदरादिपरिवारो यस्य स एव जनो मनुष्यस्तस्य परिवाररहितस्य बन्धुस्त्वं परिवारोऽसि । तथा त्वं असहायस्य दिवानिशं सहायः न विद्यन्ते सहायाः सहचारिणो यस्य तस्य त्वं दिवानिशं सदैवाहर्निशं सहायः सर्वत्र सहचार्यसि । तथा हे धर्म अङ्गी प्राणी त्वां भवन्तं बान्धवं स्वकीयजनसमूहं अपहाय परिहृत्य स निराधारोऽङ्गी भीमे महाभयानके भवगहने भवारण्ये भ्राम्यति चतुर्गतिषु पर्यटतीत्यर्थः ॥ ६ ॥

ङ्गति गहनं जलति कृशानुः स्थलति जलधिरचिरेण ।

तव कृपयाखिलकामितसिद्धिर्बहुना किं नु परेण, पा० ॥ ७ ॥

व्याख्या—हे श्रीजिनधर्म तव कृपया भवतः संबन्धिनी या कृपा जनोपरि सानुकूलदृष्टिपातरूपा करुणा तया हेतुभू-

तया । जनस्य गहनं श्वापदाकीर्णं वनं नगति समृद्धनगरायते । कृशानुः वनदवाग्निरपि जलति नीरायते । जलधिः समुद्रोऽपि अचिरेण शीघ्रतया स्थलति स्वाभाविकनिर्जलभूमिभागायते । अखिलकामितसिद्धिः सकलसमीहितस्य सिद्धिर्निष्पत्तिस्तव प्रसादात्संपद्यते । तर्हि हे श्रीजिनधर्म त्वां विना बहुला प्रभूतेनापि परेण धनकुटुंबविषयसुखादेना किं नु अस्माकं किं प्रयोजनमस्ति ? न किमपीत्यर्थः ॥ ७ ॥

इह यच्छसि सुखमुदितदशांगं प्रेत्येन्द्रादिपदानि ।
क्रमतो ज्ञानादीनि च वितरसि निःश्रेयससुखदानि, पा० ॥ ८ ॥

व्याख्या—हे धर्म त्वमेव जनानां इह वर्तमानभवे उदितदशाङ्गं सुखं उदितानि वृद्धिं प्राप्तानि दशांगानि धनारोग्याधिकलेन्द्रियादिदशविधसाधनानि यत्र तत्तादृशं सुखं शर्म यच्छसि ददासि । प्रेत्य जन्मान्तरे । इन्द्रादिपदानि इन्द्रामिन्द्रलोकान्तिकादीनि यच्छसि । च पुनः क्रमतः क्रमेण सुरनरभवपरंपरया । निःश्रेयससुखदानि परिपूर्णत्वेन मोक्षसंपादकानि । ज्ञानादीनि सर्वज्ञत्वसर्वदर्शित्वादीनि । वितरसि ददासीत्यर्थः ॥ ८ ॥

अथोपसंहारमाह—

सर्वतंत्रनवनीत सनातन सिद्धिसदनसोपान । जय जय विनयवतां प्रतिभंजितशान्तसुधारसपान, पा० ९

॥ इति श्रीशान्तसुधारसगेयकाव्ये धर्मभावनाविभावनो नाम दशमः प्रकाशः ॥

व्याख्या–हे श्रीजिनधर्म सर्वतंत्रनवनीत हे सर्वविश्वधर्मशास्त्रपरमार्थभूतस्वरूप सनातन हे भूतभवद्भविष्यत्सर्वसमयविद्यमानाविनाशिन् । सिद्धिसदनसोपान हे मुक्तिमन्दिरसमारोहणोर्ध्वगतिपदपंके "दादरो" इति लोकोक्तिः । विनयवतां विनीतपुरुषाणां प्रतिसंचितशान्तसुधारसपान हे प्रतिक्षणप्रापितशान्तरसामृतपान त्वं जय जय परधर्मान् सर्वानभिभूय सर्वोपरिवर्ती भवेत्यर्थः ॥ ९ ॥

॥ इति श्रीतपागच्छीयसंविग्नशाखीयपरममुनिश्रीवृद्धिविजयमुख्यशिष्यश्रीमुक्तिविजयगणिसतीर्थ्यतिलकमुनिश्रीवृद्धिविजयचरणयुगसेविना पंन्यासगंभीरविजयगणिना विरचितायां श्रीशान्तसुधारसटीकायां धर्मस्वाख्याततावनाविभावनो नाम दशमः प्रकाशः समजनि ॥



## ॥ एकादशः प्रकाशः ॥

उक्तो दशमः प्रकाशः । तदन्ते च धर्मः सिद्धिसदनसोपानत्वेनोपदिष्टः । सिद्धिश्च लोकाग्रे प्रतिष्ठिता । अत एकादशे प्रकाशे लोकस्वरूपभावनां विभावयन्नाह । तस्याश्चायमादिमः श्लोकः—

( शालिनीवृत्तम् )

सप्ताधोऽधो विस्तृता याः पृथिव्यश्छत्राकाराः सन्ति रत्नप्रभाद्याः ।
ताभिः पूर्णो योऽस्त्यधोलोक एतौ पादौ यस्य व्यायतौ सप्तरज्जूः ॥ १ ॥

व्याख्या—सप्ताधोऽध इत आरभ्य सोऽयमिति पञ्चमश्लोकपर्यन्तेन कुलकेन लोकस्वरूपं वर्णयन्तः प्राहुः । या रत्नप्रभाद्या याः प्रोच्यमानस्वरूपा रत्नप्रभाद्या रत्नप्रभेति गुणनिष्पन्नाख्या यस्याः साद्या प्रथमा यासां ता रत्नप्रभाद्याः, आदिना शर्कराप्रभा २ वालुका ३ पंक ४ धूम ५ तमः ६ तमस्तम इति क्रमेण प्रभापदयुक्ताः । सप्त सप्तसंख्याकाः । अधोऽधो विस्तृताः क्रमेणोपरितनोपरितनाभ्योऽधस्तन्योऽधस्तन्यो विशालाः परिपाट्या एकैकरज्ज्वधिकक्षेत्रप्रमाणा इति यावत् । छत्राकारा उपर्युपरि प्रतिष्ठितसप्तछत्रनिभा एकैका अपि क्रमशः संक्षिप्तोपरितनवर्तुलाकारा अधस्ताद्विस्तरवत्यः पृथिव्यो भूमयः सन्ति विद्यन्ते ताः । तथा ताभिः पूर्णः सप्तमहीभिर्व्याप्तो योऽधोलोकोऽस्ति स एतौ द्वौ यस्य पुरुषाकारधृतलोकस्य सप्तरज्जूर्व्यायतौ पादौ सप्तरज्जुपरिमाणौ व्यायतौ विशेषेण साधिकतया आयतौ समुन्नतत्वेन दीर्घौ पादौ द्वौ चरणौ भवतः ॥ १ ॥

तिर्यग्लोको विस्तृतो रज्जुमेकां पूर्णो द्वीपैरर्णवान्तैरसंख्यैः ।
यस्य ज्योतिश्चक्रकाञ्चीकलापं मध्ये कार्श्यं श्रीविचित्रं कटित्रम् ॥ २ ॥

व्याख्या—अर्णवान्तैरसंख्यैर्द्वीपैः पूर्णः अर्णवाः समुद्रा अन्ते पर्यन्ते येषां तेऽर्णवान्ताः प्रत्येकस्य पर्यन्त एकैकस्यार्णवस्य सद्भावात्तैरर्णवान्तैः असंख्यैः संख्यापरिमाणरहितैः द्वीपैर्जम्बूद्वीपादिभिः पूर्णो व्याप्तो भृत इति यावत्तादृशः । एकां परिपूर्णां । रज्जुं असंख्येययोजनानां कोटिकोट्य उन्मिता दीर्घदाम्ना तया प्रमितो विस्तृतो विष्कंभमानः । ज्योतिश्चक्रकाञ्चीकलापं ज्योतींषि सूर्यचन्द्रादिविमानानि तेषां चक्रं समग्रद्वीपसमुद्रव्यापि मंडलं तद्रूपं; काञ्चीकलापं कव्याभरणवृन्दशोभितं । श्रीविचित्रं श्रियः सुरनरनगरनगरलखनिवनवाटिकासरोगजतुरंगभवनादिलक्ष्म्यस्ताभिर्विचित्रं नानाविधविभूतिशोभाभिर्विराजितं । कार्श्यं संक्षिप्तत्वेन कृशभावं प्राप्तं क्षामं तानवं गतमिति यावत् । कटित्रं कटिप्रदेशेन धारकाश्रयत्वेन त्रातं रक्षितं धृतमिति यावत् कटित्रमुदरं वर्तते यस्य पुरुषाकारलोकोदरस्य मध्येऽन्तरे निवेशितः तिर्यग्लोको मध्यलोकोऽस्तीत्यर्थः ॥ २ ॥

लोकोऽथोर्ध्वं ब्रह्मलोके द्युलोके यस्य व्याप्तौ कूर्परौ पञ्चरज्जू ।
लोकस्यान्तो विस्तृतो रज्जुमेकां सिद्धज्योतिश्चित्रको यस्य मौलिः ॥ ३ ॥

व्याख्या—अथ तिर्यग्लोकानन्तरं ऊर्ध्वं पुरुषाकारस्योर्ध्वभागे । द्युलोके देवलोकमध्यस्थे । ब्रह्मलोके पञ्चमब्रह्मदेवलो-

कस्य प्रदेशो । पञ्चरज्जू व्याप्तौ यस्य कूर्परौ पञ्चरज्जू पञ्चभिरसंख्येययोजनानां कोटिकोटिकोट्यो दीर्घाभिः रज्जूदामिनी-भिरुन्मिते क्षेत्रे व्याप्तौ प्रसरप्राप्तौ यस्य पुरुषाकारभूतलोकस्य कूर्परौ करतलभुजदंडयोर्मध्यभागावयवौ भवतः "कूर्णी-युग्मेति" लोके । एकां रज्जुं विस्तृतो लोकस्यान्तो लोकान्तप्रदेशः । स सिद्धज्योतिश्चित्रकः सिद्धाः कृतार्था आत्मभि-स्तद्रूपं तेषां या ज्योतिः द्योतते भासतेऽनेनेति ज्योतिः निरावरणसिद्धानां प्रभा तेन चित्रको रत्नादिभिरिव मंडितः । यस्य लोकपुंसः मौलिः उत्तमाङ्गं मुकुटश्च वर्तते ॥ ३ ॥

यो वैशाखस्थानकस्थायिपादः श्रोणीदेशे न्यस्तहस्तद्वयश्च ।

कालेऽनादौ शश्वदूर्ध्वंदमत्वाद्बिभ्राणोऽपि श्रान्तमुद्रामखिन्नः ॥ ४ ॥

व्याख्या—यो लोकपुरुषः वैशाखस्थानकस्थायिपादः समतया स्थाप्येते पादौ यत्र तद्वैशाखस्थानकं तेन स्थापितौ पादौ यस्य स वैशाखस्थानकस्थायिपादः । श्रोणीदेशे कटिप्रदेशे । न्यस्तहस्तद्वयश्च न्यस्तं स्थापितं हस्तयोः करतलयोर्द्वयं युग्मं येन स तथा । अनादौ न विद्यते आदिः प्रथमदिवसादिर्यस्य सोऽनादिस्तस्मिन्ननादिमत्यपि काले प्रारभ्य शश्वदूर्ध्वंदम-त्वात् शश्वदनारतं विश्रामरहितमिति यावत् ऊर्ध्वंदम ऊर्ध्वस्थानेन स्थिरस्थितस्तस्माद्धेतोः । श्रान्तमुद्रां बिभ्राणोऽपि श्रान्तस्य मार्गादिपरिश्रमयुक्तस्य मुद्रा स्वरूपाकारस्तां बिभ्राणोऽपि धारयन्नपि । अखिन्नः परिश्रान्तत्वेन न निषण्ण इत्यर्थः ॥ ४ ॥

सोऽयं ज्ञेयः पुरुषो लोकनामा षड्द्रव्यात्माकृत्रिमोऽनाद्यनन्तः ।
धर्माधर्माकाशकालात्मसंज्ञैर्द्रव्यैः पूर्णः सर्वतः पुद्गलैश्च ॥ ५ ॥

व्याख्या—स पूर्वोक्तस्वरूपः लोकनामा लोक इत्याख्यया प्रसिद्धः पुरुषः पुमान् अयं दृश्यमानो ज्ञेय उपलक्षयितव्यः सर्वैर्धीमद्भिः । स च षड्द्रव्यात्मा षट् धर्माधर्माकाशजीवपुद्गलसमयाः षड् द्रव्याणि तान्येवात्मा स्वरूपं यस्य लोकपुंसः स तथा प्रोक्तपदार्थैकसमूह एव लोको न त्वन्यत् । स चाकृत्रिमो न केनचिद्देवादिना निष्पादितः स्वभावसिद्धत्वात् । तथाऽनाद्यनन्तो न विद्येते आद्यन्तौ यस्य सोऽनाद्यनन्तः । धर्माधर्माकाशकालात्मसंज्ञैः पुद्गलैश्च धर्मो धर्मास्तिकायो गतिपरिणामपरिणतजीवपुद्गलयोर्गतिनिर्व्यंग्योऽरूप्यचेतनद्रव्यं, अधर्मोऽधर्मास्तिकायः स्थितिर्व्यंग्यः शेषं धर्मवत्, आकाशोऽवगाहव्यंग्यः शेषं धर्मवत्, कालो नवपुराणपरत्वादिहेतुर्वर्तमानलक्षणसमयरूपः, आत्मा कर्ता भोक्ता ज्ञाता चेतनरूपः संज्ञाःप्रोक्तरूपनामवद्भिः पञ्चभिः पुद्गलैश्च परमाणुद्व्यणुकाद्यनन्ताणुकस्कन्धपर्यन्तैः । द्रव्यैर्गुणपर्यायवद्भिः पदार्थैः । सर्वत ऊर्ध्वाधस्तिर्यक्षु दिक्षु । पूर्णतया भृतोऽस्तीत्यर्थः ॥ ५ ॥

रंगस्थानं पुद्गलानां नटानां नानारूपैर्नृत्यतामात्मनां च ।
कालोद्योगस्वस्वभावादिभावैः कर्मातोद्यैर्नर्तितानां नियत्या ॥ ६ ॥

व्याख्या—तथाऽयं लोकः । नियत्या अनादिलोकस्थितिपरिणत्या । नर्तितानां नर्तनक्रियासु नियोजितानां अनेकविध-परिणामपरिणतिभाक्कृतानामिति यावत् । पुद्गलानां औदारिकाद्यष्टविधवर्गणापरिणतानन्तपरमाण्वात्मकस्कन्धानां ।

नटानां नटा जीवपात्राणा नाटयितारस्तेषां । च पुनः । काळोद्योगस्वस्वजावादिजावैः काळः सुखदुःखादिकार्यनिष्पत्ति-
योग्योऽवसरः उद्योगस्तन्निष्पादक उद्यमः स्वस्वजावः स्वस्मिन् सुखित्वादिजवनस्वजावता आदिशब्दात्तथाविधपूर्व-
कृतकर्मोदयजवितव्यते ग्राह्ये त एव जावाः पदार्थास्तैः । कर्मातोद्यैः कर्माणि कृत्याकृत्यरूपशुजाशुजकर्तव्यानि तान्ये-
वातोद्यानि वीणावेणुमृदंगादिनर्तनाप्रेरकवाद्यानि तैः कृतप्रेरणापूर्वकाणां नानारूपैः नारकतिर्यङ्नरामरैकेन्द्रियाद्याकारै-
र्धृतबहुविधनेपथ्यैर्नृत्यतां परिपाट्या चतुर्गतिप्रापणपरिहरणरूपनर्तनं कुर्वाणानां । आत्मनां जीवानां पुद्गलनटानां जीव-
नर्तकानां च । रंगस्थानं नाट्यमंरूपो वर्ततेऽयं लोक इति शेष इत्यर्थः ॥ ६ ॥

एवं लोको जाव्यमानो विविक्त्या विज्ञानां स्यान्मानसस्थैर्यहेतुः ।
स्थैर्यं प्राप्ते मानसे चात्मनीना सुप्राप्यैवाध्यात्मसौख्यप्रसूतिः ॥ ७ ॥

व्याख्या–एवं पूर्वोक्तन्यायेन विविक्त्या आत्मानात्मवस्तुस्वर्गमर्त्यपाताळविजागविवेकेन सह विजने स्थित्वा । लोकः प्रोक्तस्वरूपः । जाव्यमानो विविधरूपश्चिन्त्यमानः । विज्ञानां विशिष्टज्ञानवतां । मानसस्थैर्यहेतुः मानसस्य मनोध्यानस्य स्थैर्यं स्थिरस्थितिस्तस्य हेतुर्निमित्तं स्याद्भवेत् । च पुनः । मानसे मनोवृत्तौ । स्थैर्यं स्थिरस्य जावः स्थैर्यं निश्चलत्वं । प्राप्ते लब्धे सति । आत्मनीना आत्महितजननी । अध्यात्मसौख्यप्रसूतिः आत्मिकसुखस्वजावोत्पत्तिः । सुप्राप्यैव सुखेन लन्यैव जवतीत्यर्थः ॥ ७ ॥

अथ लोकस्वरूपभावनां गेयपद्याष्टकेन विभावयन्नाह—

विनय विभावय शाश्वतं हृदि लोकाकाशम् ।

सकलचराचरधारणे परिणमदवकाशम्, वि० ॥ १ ॥

व्याख्या—हे विनय हे विनीतात्मन् हृदि स्वचित्ते शाश्वतं सनातनमविनश्वरं लोकाकाशं सर्वदिक्षु लोकसीमापरिमितमाकाशखण्डं विभावय विविधभेदैश्चिन्तय । सकलचराचरधारणे सकलाः समग्रा निःशेषा इति यावत् चराः स्थानान्तरयायिनो विनश्वराश्च परमाण्वादयः, न चरा न स्थानान्तरयायिनो न सर्वथा विनश्वरा धर्मास्त्यधर्मास्तिमेरुस्वर्गविमाननरकादयस्तेषां धारणे स्वस्वरूपमर्यादाजाजनीजयने । परिणमन् तत्तदाधेयाकारावस्थान्तरत्वं व्रजन् अवकाशः प्रवेशनिर्गमावगाहाश्रयदातत्वं यस्य तं लोकाकाशं ध्यायस्वेत्यर्थः ॥ १ ॥

लसदलोकपरिवेष्टितं गणनातिगमानम् । पञ्चभिरपि धर्मादिभिः सुघटितसीमानम्, वि० ॥ २ ॥

व्याख्या—अलोकपरिवेष्टितं लसत् न विद्यते लोको धर्माधर्मपुद्गलजीवानामन्वयो यस्मिन् सोऽलोकः केवलमङ्गनाकाशस्थलीभूतोऽवकाशमात्रस्तेन परि समन्ताद्वेष्टितः स्वोदरमध्ये निवेशितो लसत् दीप्यते पञ्चास्तिकायात्मकत्वेन शोभते च तं गणनातिगमानं गणनया संख्ययाऽतिगमतिक्रान्तं मानं परिमाणं यस्य सोऽसंख्येयः परिमाणेन वर्तते तं । धर्मादिभिः प्रोक्तस्वरूपैर्धर्मास्तिकायादिभिः पञ्चभिरपि समुदितैः पञ्चसंख्यैरपि न तु कश्चिदेकद्वित्रिभिः । सुघटितसीमानं सुष्ठु सम्यक् शोभना सुन्दरा घटिता रचिता सीमाऽलोकतो भिन्नतावोधिनी मर्यादा यस्य स तम् ॥ २ ॥

नटानां नटा जीवपात्राणि नाटयितारस्तेषां । च पुनः । कालोद्योगस्वस्वभावादिभावैः कालः सुखदुःखादिकार्यनिष्पत्तियोग्योऽवसरः उद्योगस्तन्निष्पादक उद्यमः स्वस्वभावः स्वस्मिन् सुखित्वादिभवनस्वभावता आदिशब्दात्तथाविधपूर्वकृतकर्मोदयभवितव्यते ग्राह्ये त एव भावाः पदार्थास्तैः । कर्मातोद्यैः कर्माणि कृत्याकृत्यरूपशुभाशुभकर्तव्यानि तान्येवातोद्यानि वीणावेणुमृदंगादिनर्तनाप्रेरकवाद्यानि तैः कृतप्रेरणापूर्वकाणां नानारूपैः नारकतिर्यङ्नरामरैकेन्द्रियाद्याकारैर्धृतबहुविधनेपथ्यैर्नृत्यतां परिपाट्या चतुर्गतिप्रापणपरिहरणरूपनर्तनं कुर्वाणानां । आत्मनां जीवानां पुद्गलनटानां जीवनर्तकानां च । रंगस्थानं नाट्यमंडपो वर्ततेऽयं लोक इति शेष इत्यर्थः ॥ ६ ॥

एवं लोको भाव्यमानो विविक्त्या विज्ञानां स्यान्मानसस्थैर्यहेतुः ।
स्थैर्यं प्राप्ते मानसे चात्मनीना सुप्राप्यैवाध्यात्मसौख्यप्रसूतिः ॥ ७ ॥

व्याख्या—एवं पूर्वोक्तन्यायेन विविक्त्या आत्मानात्मवस्तुस्वर्गमर्त्यपातालविभागविवेकेन सह विजने स्थित्वा । लोकः प्रोक्तस्वरूपः । भाव्यमानो विविधरूपश्चिन्त्यमानः । विज्ञानां विशिष्टज्ञानवतां । मानसस्थैर्यहेतुः मानसस्य मनोध्यानस्य स्थैर्यं स्थिरस्थितिस्तस्य हेतुर्निमित्तं स्याद्भवेत् । च पुनः । मानसे मनोवृत्तौ । स्थैर्यं स्थिरस्य भावः स्थैर्यं निश्चलत्वं । प्राप्ते लब्धे सति । आत्मनीना आत्महितजननी । अध्यात्मसौख्यप्रसूतिः आत्मिकसुखस्वभावोत्पत्तिः । सुप्राप्यैव सुखेन लभ्यैव भवतीत्यर्थः ॥ ७ ॥

अथ लोकस्वरूपभावनां गेयपद्याष्टकेन विभावयन्नाह—

विनय विभावय शाश्वतं हृदि लोकाकाशम् ।
सकलचराचरधारणे परिणमदवकाशम्, वि० ॥ १ ॥

व्याख्या—हे विनय हे विनीतात्मन् हृदि स्वचित्ते शाश्वतं सनातनमविनश्वरं लोकाकाशं सर्वदिक्षु लोकसीमापरिमितमाकाशखण्डं विभावय विविधभेदैश्चिन्तय । सकलचराचरधारणे सकलाः समग्रा निःशेषा इति यावत् चराः स्थानान्तरयायिनो विनश्वराश्च परमाण्वादयः, न चरा न स्थानान्तरयायिनो न सर्वथा विनश्वरा धर्मास्त्यधर्मास्तिमेरुस्वर्गविमाननरकादयस्तेषां धारणे स्वस्वरूपमर्यादापालनीत्रवने । परिणमन् तत्तदाधेयाकारावस्थान्तरत्वं व्रजन् अवकाशः प्रवेशनिर्गमावगाहाश्रयदानत्वं यस्य तं लोकाकाशं ध्यायस्वेत्यर्थः ॥ १ ॥

लसदलोकपरिवेष्टितं गणनातिगमानम् । पञ्चभिरपि धर्मादिभिः सुघटितसीमानम्, वि० ॥ २ ॥

व्याख्या—अलोकपरिवेष्टितं लसत् न विद्यते लोको धर्माधर्मपुद्गलजीवानामन्वयो यस्मिन् सोऽलोकः केवलमहानाकाशस्थलीभूतोऽवकाशमात्रस्तेन परि समन्ताद्वेष्टितः स्वोदरमध्ये निवेशितो लसत् दीप्यते पञ्चास्तिकायात्मकत्वेन शोभते च तं गणनातिगमानं गणनया संख्ययाऽतिगमतिक्रान्तं मानं परिमाणं यस्य सोऽसंख्येयः परिमाणेन वर्तते तं । धर्मादिभिः प्रोक्तस्वरूपैर्धर्मास्तिकायादिभिः पञ्चभिरपि समुदितैः पञ्चसंख्यैरपि न तु क्वचिदेकद्वित्रिभिः । सुघटितसीमानं सुष्ठु सम्यक् शोभना सुन्दरा घटिता रचिता सीमाऽलोकतो भिन्नताबोधिनी मर्यादा यस्य स तम् ॥ २ ॥

**समवघातसमये जिनैः परिपूरितदेहम् । असुमदणुकविविधक्रियागुणगौरवगेहम्, वि० ॥ ३ ॥**

व्याख्या–समवघातसमये सं प्रकर्षातिशयेनावघातः सर्वलोकाकाशावयवभूतेषु गगनप्रदेशेषु स्वात्मप्रदेशानां प्रक्षेपणं तस्य यः समयोऽष्टसामयिकोऽवसरस्तस्मिन् । जिनैस्तीर्थकरैः सामान्यकेवलिभिश्च । परिपूरितदेहं परि समन्तात् दिग्विदिक्षु पूरितः समग्रप्रदेशेषु व्यापनरूपेण भृतो देहः सकलप्रदेशसमुदयरूपशरीरं यस्य स एकजीवप्रदेशतुल्यप्रदेशी तं । असुमदणुकविविधक्रियागुणगौरवगेहं असवो द्रव्यभावप्राणाः सन्ति एषां तेऽसुमन्तो जीवाः, अणुकाः परमाणुद्व्यणुकादिसर्वपुद्गलास्तेषां या विविधा गमनावगाहनादिनानाप्रकाराः क्रियाः प्रवृत्तिनिवृत्त्युत्पादव्ययस्थित्यादिरूपाः, गुणा ज्ञानादयो वर्णादयश्च तेषां गौरवं हानिवृद्ध्यादिरूपं प्राचुर्यं, द्वन्द्वे कृते तेषां गेहं सर्वेषामाश्रयत्वान्निवाससदनं तद्भावयस्वेत्यर्थः ॥३॥

प्रोक्तस्वरूपे लोके ध्यातव्यप्रकारान् दर्शयति । ततो यत्र यदाकारवर्तनां वक्ष्ये तत्र तत्तथा भावनीयं भावनाधिकारत्वात्

**एकरूपमपि पुद्गलैः कृतविविधविवर्तम् । काञ्चनशैलशिखरोन्नतं कचिदवनतगर्तम्, वि० ॥ ४ ॥**

व्याख्या–एकरूपमपि इमं लोकं सर्वत्र समग्रपञ्चास्तिकायमयत्वेन एकरूपमपि सर्वत्रैकाकारधारकं वर्तमानमपि पुद्गलैः पुद्गलस्कन्धानां विचित्राकारपरिणत्या कृतविविधविवर्तं कृता रचिता विविधा अनेकभेदैर्विभिन्ना विवर्ताः समुदायविभागोत्पादा यस्मिन् स तथा तं आकारभेदयुक्तं भावय । पुद्गलविवर्तमेवाह–क्वचिदिति सर्वत्र संबन्धनीयं । लोकः क्वचित् कियत्प्रदेशेषु काञ्चनशैलशिखरोन्नतं काञ्चनं नानाजातीयसुवर्णं तन्मयाः शैलाः पञ्चमेरुनीलवन्निषधरुक्मिमहाहेमवच्छिखरिलघुहेमवद्वक्षस्कारमानुषोत्तराञ्जनगिरिरुचककुण्डलगिरिप्रभृतिपर्वताः तेषां शिखराणि प्रोक्तान्यपर्व-

तत्र मिस्थजंबूकदम्बवृक्षादीनां त्रिविधानि तैरुन्नत उत्तुंगो वर्तते यस्तं । क्वचिदवनतगर्तं क्वचित् केषुचित्प्रदेशेषु अवनता अतिशयेनाधोऽधो निमग्ना गर्ता अधोलोकादिसंज्ञा यस्मिन्स तथा तम् ॥ ४ ॥

क्वचन तन्निपमणिमन्दिरैरुदितोदितरूपम् । घोरतिमिरनरकादिभिः क्वचनातिविरूपम्, वि० ॥ ५ ॥

व्याख्या—क्वचन केषुचित्प्रदेशेषु । तन्निपमणिमन्दिरैरुदितोदितरूपं तन्निपा देवलोकास्तेषु यानि मणिमयानि मन्दिराणि शाश्वतत्त्वायपरिणतानि विमानजुवनजौमेयनगराणि तैः मत्ताल्लासुरैरुदितोदितं वृद्धादप्यतिशयेन वृद्धिप्राप्तं रूपं सौन्दर्यं यस्य स तथा तं । अथवा तन्निपा जवनव्यन्तरज्योतिःसौधर्मादिचतुर्विधदेवलोकसमुदेपत्प्राग्भारादिपृथिव्यः, मणयः खनिगतारत्नरणविमानजयनजितिस्तंजादिस्थितानि रत्नानि, मन्दिराणि चक्रिविष्णुविद्याधरादिनिवाससदनानि, तत्राजिरुदितोदितं रूपं यस्य स तथा तं । क्वचन केषुचित्प्रदेशेषु घोरतिमिरनरकादिभिः घोरा सविसमलुर्गलनीयत्नयंकरप्रेतवनादयः, तिमिरं गहनान्धकारयुक्तगुहादि, नरका रत्नप्रजादिपृथिवीगतसीमन्तकादयः, द्वन्द्वे कृते तैः कृत्वाऽतिविरूपोऽतिशयेन विषमं बीजत्सं जयानकं रूपमाकृतिर्दर्शनं यस्य स तथा तं ॥ ५ ॥

क्वचिदुत्सवमयमुज्ज्वलं जयमंगलनादम् । क्वचिदमन्दहाहारवं पृथुशोकविषादम्, वि० ॥ ६ ॥

व्याख्या-क्वचित् केषुचित्प्रदेशेषु स्वर्गराजसमृद्धजनमन्दिरादिपुण्यवद्गृहेषु । उज्ज्वलं सातिशयप्रौढं । उत्सवमयं उत्सवा गीतवाद्यनृत्यपुत्रजन्मविवाहविजयप्राप्त्यादिमहामहास्ते प्रचुरा यत्र स तन्मयस्तं । मंगलजयनादं मंगलानि श्रेयोमहासमृद्धिसंपादकानि देवगुरुनमनस्तवनपूजनदध्यक्षतादीनि जयनादा मागधादिवन्दिवृन्दपठ्यमानजयजीवचिरंनन्दादिध्वनयो

यत्र स तथा तं। क्वचिदमन्दहाहारवं क्वचित्केषुचित्प्रदेशेषु नरकनरपशुवधस्थानवियोगिरोरगृहादिषु। अमन्दहाहारवं अमन्दा अतिमहान्तो हाहारवा हा मातः हा तात हा नाथ हा पुत्र इत्यादिरूपा आरवाः शब्दा यत्र स तथा तं। पृथुशोकविषादं पृथू महाविस्तीर्णौ शोकविषादौ यस्मिन् स तथा तं शोको दौर्मनस्यं विषादो दुर्भगाजीविकादिजनितः खेदस्तौ पृथू लोके इत्यर्थः ॥ ६ ॥

बहुपरिचितमनन्तशो निखिलैरपि सत्त्वैः। जन्ममरणपरिवर्तिभिः कृतमुक्तममत्वैः वि० ॥ ७ ॥

व्याख्या—कृतमुक्तममत्वैः कृतं प्रथममुत्पादितं रचितमिति यावत् जन्मसंबन्धादिग्राह्या मुक्तं पश्चान्मरणवस्तुविनाशादिना त्यक्तं ममत्वं देहादिषु मदीयत्वं यैस्ते कृतमुक्तममत्वास्तैः। जन्ममरणपरिवर्तिभिः जन्ममरणे प्रसिद्धे ताभ्यां परिवर्तयन्ति पूर्वपूर्वपरिहारेणोत्तरोत्तरग्रहणं कुर्वन्ति ये ते तथा तैः। निखिलैः समस्तैः। सत्त्वैः प्राणिभिः। अनन्तशोऽनन्तानन्तवारान् कृत्वा। बहुपरिचितं बहुः सर्वेषु प्रदेशेषु सर्वैः परिचितः पुनः पुनर्व्याप्तः यः स तथा तमित्यर्थः ॥७॥

इह पर्यटनपराङ्मुखाः प्रणमत भगवन्तम्। शान्तसुधारसपानतो धृतविनयमवन्तम्, वि० ॥ ८ ॥

॥ इति श्रीशान्तसुधारसगेयकाव्ये लोकस्वरूपभावनाविभावनो नामैकादशः प्रकाशः ॥

व्याख्या—भो भव्या यदि यूयं इह चातुर्गतिके भवे। पर्यटनपराङ्मुखाः पर्यटनं परिभ्रमणं तस्मात्पराङ्मुखा भग्नपरिणामा जाताः। तर्हि धृतविनयं धृतः सम्यक् परिणमितः विनयः विनयभावः येन स तथाभूतं प्राणिनं। शान्त-

सुधारसपानतः शान्तसुधारसपानस्य प्रदानतः । भवन्तं भवभ्रमणारूढयं कुर्वन्तं । भगवन्तं श्रीमज्जिनं । प्रणमत सुज्ञ-
पत्या नया भवतेत्यर्थः ॥ [illegible] ॥

॥ इति श्रीतपागच्छीयसंविग्नशाखीयपरममुनिश्रीबुद्धिविजयमुख्यशिष्यश्रीमुक्तिविजयसतीर्थ्यतिलकमुनिश्रीवृद्धिविजय-
चरणयुगसेविना पंडितगंभीरविजयगणिना विरचितायां शान्तसुधारसटीकायां लोकस्वरूपभावनाविभावनो नामैका-
दशः प्रकाशः समजनि ॥

---

## ॥ द्वादशः प्रकाशः ॥

उक्त एकादशः प्रकाशः । तदन्ते च शान्तसुधारसतो विनयवतां भवभ्रमणाद्भङ्कजिनप्रणाम उपदिष्टः । शान्तरसविनयप्रणामाश्च धर्मसामग्रीप्राप्त्या प्राप्यन्ते । सा चातिदुर्लभाऽतो द्वादशे बोधिदुर्लभभावनां विभावयन्नाह । तस्याश्चायमादिमः श्लोकः—

( मन्दाक्रान्तावृत्तम् )

यस्माद्विस्मापयितसुमनःस्वर्गसंपद्विलासप्राप्तोल्लासाः पुनरपि जनिः सत्कुले भूरिभोगे ।
ब्रह्माद्वैतप्रगुणपदवीप्रापकं निःसपत्नं तद्दुष्प्रापं भृशमुरुधियः सेव्यतां बोधिरत्नम् ॥१॥

व्याख्या—हे उरुधियो हे महाविशालबुद्धयो युष्माभिः स्वहृदि वक्ष्यमाणं विभाव्यतां । यस्माद्वक्ष्यमाणस्वरूपाद्बोधिरत्नाद्भूयांसो भव्या विस्मापयितसुमनःस्वर्गसंपद्विलासप्राप्तोल्लासाः विस्मापयिताश्चित्ते चमत्कारं आहिताः सुमनसो देवाः पण्डिता ज्ञानिनश्चेति यावत् यैः स्वर्गसंपदः इन्द्राहमिन्द्रादिस्वर्गिणां संबन्धिन्यः संपदः स्वर्गसंपदस्तासां ये विलासाः शृंगारगीतवाद्यनृत्यसुरीविनोददीप्त्यादयस्तैः प्राप्तोल्लासाः प्राप्ता भोग्यत्वेनोपगता उल्लासाः प्रकाशा आविर्भावा महानन्दविस्ताराश्चेति यावत् तथाविधा मनुष्येभ्यः देवत्वेनाभवन् भवन्ति भविष्यन्ति । पुनरपि देवभोगभुक्तोत्तरकाले स्वर्गाच्च्युता भूयोऽपि मनुष्यत्वे भूरिभोगे सत्कुले भूरयोऽतिप्रचुरा भोगाः शब्दादिपञ्चविषयजन्यविलासा यस्मिन्

तादृशे सत्कुले राज्यसमृद्ध्यादिमत्प्रधानवंशे जनिः प्रसूतिर्जन्म भवति । तथा यत् निःसपत्नं अनन्यसदृशं निर्णीतं महाद्वैतप्रगुणपदवीप्रापकं अत्र शुद्धनिरञ्जनचैतन्यस्वरूपं अद्वैतं निर्भेदैकप्रकारं प्रगुणाः प्रकर्षा गुणा ज्ञानादयो यस्यां सा पदवी विशिष्टगतिप्राप्तिः तस्याः प्रापकं साधनं वर्तते । तत्प्रोक्तगुणं भृशमतिशयतो दुष्प्रापं दुर्लभं । बोधिरत्नं नरभवादिधर्मसामग्रीं प्राप्य सेव्यतां परिपाल्यतामित्यर्थः ॥ १ ॥

अथ बोधिप्राप्तिदुर्लभत्वे हेतुमाह—

( भुजंगप्रयातवृत्तत्रयम् )

अनादौ निगोदान्धकूपे स्थितानामजस्रं जनुर्मृत्युदुःखार्दितानाम् ।
परीणामशुद्धिः कुतस्तादृशी स्याद्यया हन्त तस्माद्विनिर्यान्ति जीवाः ॥ २ ॥

व्याख्या—अनादौ न विद्यते आदिरुत्पत्तेः समयमुहूर्तप्रहरदिवसमासवर्षादिभिः प्रायस्थं प्रवाहतोऽप्यपरापरनिगोदोत्पत्त्या सर्वकाले विद्यमानत्वादादेरभावो यस्य सोऽनादिस्तस्मिन्ननादौ । निगोदान्धकूपे निगोदश्चासावन्धकूपश्च निगोदान्धकूपस्तस्मिन् । अजस्रं निरंतरं प्रत्येकशरीरेऽवतारप्राप्त्यन्तरालाभावात्सततं स्थितानां निवसतां । निगोदो हि जिनागमपरिभाषयाऽन्तर्मुहूर्तस्थितिकांगुलासंख्येयमानचर्मचक्षुरदृश्यानन्तजीवमयं सूक्ष्मं शरीरमुच्यते स एवान्धकूपोऽनन्तजीवानामनन्तजन्मस्थानत्वेनादृश्यतमभागत्वादन्धकूपस्तस्मिन् स्थितानां कृतनिवासानां। जनुर्मृत्युदुःखार्दितानां जनुषः भूयो भूय एकस्मिन् श्वासनिःश्वासमात्रे काले सप्तदश जन्मानि, मृत्यवोऽपि जन्मोन्मितानि मरणानि कष्टानि तैरर्दिताः

सदैव पीडिता ये ते तथा तेषां। हन्तेति खेदे। यया परिणामशुद्ध्या। तस्मात्प्रोक्तस्वरूपनिगोदान्धकूपात्। जीवाः साधारणशरीरिप्राणिनः। विनिर्यान्ति प्रत्येकत्वबादरत्वप्रापणेन निर्गच्छन्ति। तादृशी शुभोदयजनिता ततो निर्गमयोग्या शुद्धा परिणामशुद्धिः वर्धमानपुण्योदयजनिता तानपेक्ष्याखण्डसुन्दरपरिणतिधारा. कुतः स्यात् कस्माद्भवेत्? साधनसामग्र्यभावान्नैव स्यात्। तस्माद्बोधिर्दुर्लभेत्यर्थः॥ २॥

ततो निर्गतानामपि स्थावरत्वं त्रसत्वं पुनर्दुर्लभं देहभाजाम्।
त्रसत्वेऽपि पञ्चाक्षपर्याप्तसंज्ञिस्थिरायुष्यवद्दुर्लभं मानुषत्वम्॥ ३॥

व्याख्या—ततो निगोदराशितः। निर्गतानां कथञ्चिदकस्माज्जाताकामनिर्जराबलाद्भूतानामपि। देहभाजां प्राणिनां पृथिव्यादित्वमेव लभते। ततः स्थावरत्वमेव भवति प्रायेण। तस्मात् त्रसत्वं पुनर्दुर्लभं त्रसत्वं द्वित्रिचतुःपञ्चेन्द्रियत्वं तत्पुनः प्रत्येकशरीरित्वे प्राप्तेऽपि दुर्लभं दुष्प्रापं भवसंख्योत्सर्पिण्यवसर्पिणीप्रमितपृथिव्यादीनां कायस्थितेरन्तरितत्वात्। त्रसत्वाभावे बोधिलाभाभावोऽतोऽपि दुर्लभं। त्रसत्वेऽपि त्रसत्वं प्रोक्तरूपं तत्प्राप्ते सत्यपि यथोत्तरं क्रमेण पञ्चाक्षपर्याप्तसंज्ञिस्थिरायुष्यवत् दुर्लभं वच्छब्दः प्रत्येकं संबन्धनीयः, ततः पञ्चाक्षवत् पञ्च स्पर्शनादीन्यक्षाणीन्द्रियाणि यत्र जन्मनि तत्पञ्चाक्षवदित्येवं सर्वत्र ज्ञेयं, पर्याप्तय आहारादिषड्विधाः पूरिता यत्र तत्पर्याप्तिवत्, संज्ञा दीर्घकालिककार्यविचारकृन्मनोज्ञानवद्भवति तत्संज्ञि, स्थिरायुष्यवत् स्थिरं दीर्घनिरुपक्रमायुर्जीवितं विद्यते यत्र तत्तथाविधं त्रसत्वं

दुर्लभं, तदभावे बोध्यभावः, श्रोत्ररूपत्रसत्वं नारकतिर्यग्देवेष्वपि विद्यते, न च तत्र सर्वांगान्वितबोधिलाभोऽस्तीत्यत आह–मानुषत्वं ततोऽपि सर्वांगसमन्वितं मानुषत्वं मनुष्यजन्मवत्त्वं सुदुर्लभं वर्तते । अत्रैव समग्रधर्मसामग्रीलाभसंभवोऽस्तीत्यतः प्रमादमपहाय प्रयतो भवेत्यर्थः ॥ ३ ॥

प्रयत्नार्थैवोपदिशन्नाह–

तदेतन्मनुष्यत्वमाप्यापि मूढो महामोहमिथ्यात्वमायोपगूढः ।
भ्रमन् दूरमग्नो भवागाधगर्ते पुनः क्व प्रपद्येत तद्बोधिरत्नम् ॥ ४ ॥

व्याख्या—तत्तस्मात्पूर्वोक्तमनुष्यजन्मदुर्लभविज्ञानात्त्वं एतत् मनुष्यत्वं साक्षाद्दृश्यमानं प्राप्तोऽसि, प्रयत्नपरो धर्मं समाचर, तदकरणाच्च त्वमपि मनुष्यत्वमाप्यापि मनुष्यजन्मप्राप्तोऽपि महामोहमिथ्यात्वमायोपगूढः महामोहोऽष्टाविंशतिविधसमग्रमोहोदयः, मिथ्यात्वं देवगुरुधर्मेषु विपरीतश्रद्धाभावः, माया परवञ्चनवृत्तिः, तैरुपगूढोऽतिशयेन व्याप्तो ग्रस्त इति यावत् । भवागाधगर्ते भवैरनन्तजन्मभिरप्यगाधोऽलब्धपारो यद्वा भव एव संसार एवागाधोऽलब्धतीरो भवागाधः स एव गर्तो गंभीरभूच्छिद्रं तस्मिन् । दूरमग्नोऽतिप्रगाढतरं बुडितो भ्रमन् जन्ममज्जनिमज्जतां कुर्वन् । मूढोऽज्ञातोपायत्वेन व्याकुलः सन् । पुनर्भूयः । तद्बोधिरत्नं पूर्वोक्तमहामहर्घ्यं धर्मसामग्रीचिन्तामणिं । क्व केषु द्रव्यक्षेत्रकालभावेषु लब्धेषु प्रपद्येत प्राप्नुयात् ? न क्वापीत्यर्थः ॥ ४ ॥

अथ वर्तमानकालवैषम्येण श्रद्धाशिथिलकारिहेतुविद्यमानतादर्शनपूर्वकं दृढश्रद्धायुक्तं भवितव्यमित्युपदिशति—

( शिखरिणीवृत्तम् )

**विभिन्नाः पन्थानः प्रतिपदमनल्पाश्च मतिनः कुयुक्तिव्यासंगैर्निजनिजमतोल्लासरसिकाः ।**
**न देवाः सांनिध्यं विदधति न वा कोऽप्यतिशयस्तदेवं कालेऽस्मिन् य इह दृढधर्मा स सुकृती ॥५॥**

व्याख्या—अस्मिन् प्रत्यक्षमनुभूयमाने कालेऽतिक्लिष्टभावापन्ने पञ्चमारके कलियुगे पन्थानो मोक्षमार्गा विभिन्ना विविधान् भेदान् प्राप्ताः तान् दृष्ट्वा दोलायमानमानसाः श्रद्धाशैथिल्यं भजन्तीत्येको हेतुः १। अत्रायं भावः—ईश्वरकारणिका ईश्वरानुग्रहादेव,कालवादिनः कालादेव,स्वभाववादिनः स्वभावादेव,पुरुषाकारवादिनः पौरुषात्,नियतिवादिनो नियतितः, मोक्षादिसकलकार्यसिद्धिं मन्यन्ते। प्रतिपदं स्थाने स्थाने ग्रामेषु नगरेषु वनाश्रमादिषु। अनल्पाश्च अतिप्रभूताः। चकारादतिस्पमताग्रहग्रस्ताश्च। मतिनो बौद्धसांख्यनैयायिकवैशेषिकजैमिनीयचार्वाकादिमतवादिनः सन्ति। कीदृशास्ते ? कुयुक्तिव्यासंगैर्निजनिजमतोल्लासरसिकाः कुत्सिता वस्तुस्वरूपे विसंवादिन्योऽप्रमाणभूता इति यावत् युक्तयो न्यायघटनाः यथेश्वरकृतं जगत् कार्यत्वात् घटवत्, यत्र यत्र कार्यत्वं तत्र तत्र बुद्धिमत्कर्तृकत्वं दृष्टं, यथा घटे कुलालः, तथा चात्र, [redacted] च बुद्धिमानीश्वर इत्यत्र कार्यत्वमात्रानुमानप्रतिबद्धा वस्तुस्वरूपानुभवविकलत्वात् कुयुक्तयस्तासां व्यासंगाः यथार्थवस्तुस्वरूपाविसंवादकविचारान् परित्यज्यैककुयुक्तिपरत्वेनासक्तयस्तैः कृत्वा। निजनिजमतं स्वस्वदर्शनपक्षस्तस्य य उल्लासः पुष्टिर्वृद्धिश्च तस्मिन् रसिकास्तद्रसास्वादलंपटाः सन्ति, अयं द्वितीयो हेतुः २। तथा दोलायमानश्रद्धावतां

दृढता येन क्रियते स उपायो न दृश्यते । यतोऽस्मिन् काले देवाश्चतुर्विधा विद्यमाना अपि तेषां तथाऽस्माकं तथाविधपुण्यबलयोग्यताऽभावात् । सांनिध्यं साहाय्यं । न विदधति धर्मफलं स्वस्य स्वर्गसंपत्प्राप्तिप्रदर्शनादिना धर्मे दृढतां नोत्पादयन्तीति तृतीयो हेतुः ३ । वाऽथवा ममान्येषामपि कोऽप्यवधिमनःपर्यायकेवलज्ञानजातिस्मरणादिरूपेष्वन्यतरोऽतिशयो ज्ञानप्रकर्षो नास्ति येन धर्माधर्मफलं स्वर्गनरकादिके गतं स्वकीयान्येषामतीतभवं च दृष्ट्वा धर्मे दृढत्वं भजाम उत्पादयामो वा । तदेवं प्रोक्तरूपे स्थिते सति किं विधेयमित्याह–हे आत्मन् इह वर्तमानावसरे यः कश्चित् दृढधर्मा निश्चलधर्मश्रद्धावान् त्वया दृश्यते तं दृष्ट्वा भवता स धर्मनिश्चलः सुकृती अहोऽयं प्रबलपुण्यभक्ती नान्यथैवंविधो भवतीति ध्येयं, तदेव स्वदृढत्वसंपादनोपाय इत्यर्थः ॥ ५ ॥

उक्तोपायेन दृढतां प्राप्य यत्कर्तव्यं तदाह—

( शार्दूलविक्रीडितं वृत्तम् )

यावद्देहमिदं गदैर्न मृदितं नो वा जराजर्जरं यावत्त्वक्षकदंबकं स्वविषयज्ञानावगाहक्षमम् ।
यावच्चायुरभंगुरं निजहिते तावद्बुधैर्यत्यतां कासारे स्फुटिते जले प्रचलिते पालिः कथं बध्यते ॥ ६ ॥

व्याख्या–बुधैर्विवेकवद्भिः पंडितैः । यावत् यावति परिमाणे कालेऽद्यापि । इदं विद्यमानं । देहं कायं । गदैः कुष्ठभगंदरवातपित्तकफादिभिः रोगैः । न मृदितं मर्दयित्वा न चूर्णीकृतं । वाऽथवा यावत् जराजर्जरं जरा वयोहानिस्तया-जर्जरं जीर्णं न भवति । तु पुनर्यावत् अक्षकदंबकमिन्द्रियगणं स्वविषयज्ञानावगाहक्षमं स्वस्वविषयज्ञानस्यावगाहने

व्याप्तुं समर्थं भवति । यावच्चायुरभंगुरं यावत्स्वायुषोऽभंगदशा वर्तते । तावत् तत्परिमाणे काले । निजहिते आत्मनः सुखदायके धर्मे यत्यतां भवद्भिः सोद्यमपरैः प्रवृत्यतां । कासारे सरोवरे स्फुटिते पद्माभंगे प्राप्ते सति । जले सरोगतनीरे प्रचलिते प्रचुरप्रवाहैर्निर्गते सति । कथं केनोपायेन । पालिः पद्मा । बध्यते बध्धुं शक्यते ? न कथञ्चित्केनापि बध्यत इत्यर्थः ॥६॥

आलस्यं नैव कर्तव्यमिति बोधयति—

( अनुष्टुब्वृत्तम् )

विविधोपद्रवं देहमायुश्च क्षणभंगुरम् । कामालंब्य धृतिं मूढैः स्वश्रेयसि विलंब्यते ॥ ७ ॥

व्याख्या—देहं शरीरं । विविधोपद्रवं नानाजातीयैरुपद्रवै रोगविद्युज्जलाग्निशस्त्रसर्पश्वापदादिविघातहेतुभिरनुबद्धं वर्तते । तथापि आयुश्च च पुनरायुर्जीवितं । क्षणभंगुरं क्षणमात्रेऽकस्मात्काचभाजनवद्भंगप्रापणशीलं ज्ञायमाने । तथापि मूढैरज्ञाततत्त्वपरमार्थैः । कां किंनामिकां । धृतिं धैर्यं वज्रकठोरहृदयत्वं । आलंब्य निर्भयनिश्चिन्तताये समालंबनं धारयित्वा । स्वश्रेयसि आत्मनः कल्याणसंपादने विलंब्यते आलस्यादिभिरेव कालो निर्गम्यते ? तन्न ज्ञायत इत्यर्थः ॥ ७ ॥

अथ गेयपद्याष्टकेन बोधिदुर्लभभावनां विभावयन्नाह—

बुध्यतां बुध्यतां बोधिरतिदुर्लभा जलधिजलपतितसुररत्नयुक्त्या ।
सम्यगाराध्यतां स्वहितमिह साध्यतां बाध्यतामधरगतिरात्मशक्त्या, बु० ॥ १ ॥

व्याख्या—बोधिरतिदुर्लभा बोधिर्मनुष्यजन्मार्यक्षेत्रावतारादिर्वक्ष्यमाणस्वरूपा धर्मसाधनप्राप्तिसामग्री साऽतिदुर्लभा

दुःखेन महाकष्टप्रबन्धेनानन्तपुद्गलपरावर्तनमितेन भवभ्रमणेन लभ्यते जीवैरित्यतिदुर्लभा वर्तते इत्येवं भवद्भिः बुध्यतां बुध्यतां सम्यग् ज्ञायतां ज्ञायतां तद्वेदनेऽत्यादरः क्रियतामित्यर्थः । ज्ञापनाय वीप्सा कृता । दृष्टान्तेन दुर्लभतां स्पष्टयति–जलधिजलपतितसुररत्नयुक्त्या जलधिः समुद्रस्तत्संबन्ध्यगाधजले पतितं करतलतो भ्रष्टं सुररत्नं चिन्तामणिरत्नं यथा पुनर्गृहीतुं लब्धुं च दुर्लभं दृश्यते, तथैव मनुष्यभवादिसमस्ततायुक्तधर्मसाधनप्राप्तिर्जीवानामुक्तरत्नयुक्त्या समुद्रजलपतितचिन्तामणिन्यायेन प्रमत्तानां पुनर्धर्मसामग्रीप्राप्तिरतिदुर्लभा तस्मात्तां प्राप्तां सम्यगाराध्यतां रागालस्यादि परिहृत्य प्रयत्नैराराध्यतां हितैषिभिः परिपाल्यतां । आराध्य चेह समस्ततायां सत्यां स्वहितमात्मकार्यं साध्यतां निष्पाद्यतां । आत्मशक्त्याऽधरगतिर्बाध्यतां आत्मनो जीवस्य शक्तिः शुभवीर्योल्लासस्तया अधरगतिर्नारकादिदुर्गतिः सा बाध्यतां निराक्रियतामित्यर्थः ॥ १ ॥

चक्रिभोज्यादिरिव नरभवो दुर्लभो भ्राम्यतां घोरसंसारकक्षे ।

बहुनिगोदादिकायस्थितिव्यायते मोहमिथ्यात्वमुखचारलक्षे बु० ॥ २ ॥

व्याख्या—भो भो आत्मन् कोऽयं स्वहिते प्रमादः ? घोरसंसारकक्षे घोरो महाभयंकरो यः संसारो नरकादिभवभ्रमणपरिवर्तलक्षण एव यः कक्षः शुष्कमहारण्यस्थली तस्मिन् । भ्राम्यतां भ्रमणशीलानां प्राणिनां । नरभवोऽकृतधर्माणां भूयो मनुष्यजन्मप्रापणं । चक्रिभोज्यादिरिव चक्रेण जयतीति चक्री षट्खण्डभरताधिपो ब्रह्मदत्ताभिधो द्वादशलक्षरे स्वसेवकविप्रकारितभोजनस्य भोज्यादिरिव भुज्यत इति भोज्यो भक्षणीयः पदार्थः स आदिर्यस्य स तथा ।

आदिना विप्रीभूय भोजनचाणक्यपाशकधान्यराशिसर्षपोद्धारयूपपुत्रद्यूतवणिग्रत्नानयनकूर्मशरच्चन्द्रदर्शनसमिलायुगरं-ध्रप्रवेशाद्यसंभवितकार्याणि ग्राह्याणि तैरिव दुर्लभो दुःप्राप्यो भविष्यति । किंविशिष्टे संसारकक्षे ? बहुनिगोदादिकायस्थितिभ्यायते बह्व्योऽतिप्रभूतानन्तासंख्यकालपरिमाणवत्यो निगोदादिकायस्थितयः निगोदः प्रोक्तरूपः स आदिर्यासां ताश्च ताः कायस्थितयश्च । आदिना पृथिव्यप्तेजोवायुवनस्पत्यादिस्थितयो ग्राह्याः । ताभिर्व्यायते विविधविशेषतं-यायते प्रदीर्घविशाले । पुनः किंविधे ? मोहमिथ्यात्वमुखचोरलक्षे मोहमिथ्यात्वे पूर्वोक्ते ते मुखे प्रधाने यस्मिन् समुदाये, चोरस्तस्करवृन्दं तस्य लक्षं पदं निवासस्थानं यस्मिन्नीदृशे संसारकक्षे भ्राम्यतां पुनर्नृभवलाभो दुर्लभोऽतः प्राप्तं सफलयेत्यर्थः ॥ २ ॥

तल्लब्धेऽप्यार्यक्षेत्रं दुर्लभमतस्तदाह—

लब्ध इह नरभवोऽनार्यदेशेषु यः स भवति प्रत्युतानर्थकारी ।
जीवहिंसादिपापाश्रवव्यसनिनां माघवत्यादिमार्गानुसारी, बु० ॥ ३ ॥

व्याख्या—इह धर्मसाधनसमस्ततायां केनापि पुण्यप्रभावेण अनार्यदेशेषु न आर्या अनार्या हिंसाद्यधर्माचरणप्रधाना ये देशाः शकयवनतुरस्कानादयो म्लेच्छजननिवासभूमयस्तेषु । यो नरभवो यो मनुष्यावतारः । लब्धः प्राप्तः स नरजन्मलाभः । प्रत्युत मनोऽभीष्टलाभविपर्यासेन । अनर्थकारी जीवहिंसादिपापहेतुभवनेन सकृतिलाभं विनाश्य नरकादिदुर्गतिकारी भवतीत्यतस्तेन लब्धेनापि किं ? स तु तेषां जीवहिंसादिपापाश्रवव्यसनिनां जीवहिंसनानृतभाषणचोरिमैथुन-

महापरिग्रहादिकरणमेव व्यसनं महाविपत्तिकारिण्यासक्तिर्विद्यते येषां तेषां प्रोक्तलाभो माघवत्यादिमार्गानुसारी माघवती सप्तमी नरकपृथ्वी सादिर्यासां ता माघवत्यादयः तास्ववतारमनुसरतीत्येवं शीलं यस्य लाभस्य । शेषं सुगमं। अतोऽनार्येषु नरभवलाभो निरर्थक इत्यर्थः ॥ ३ ॥

आर्यदेशस्पृशामपि सुकुलजन्मनां दुर्लभा विविदिषा धर्मतत्त्वे ।

रतपरिग्रहभयाहारसंज्ञार्तिभिर्हन्त मग्नं जगद्दुःस्थितत्वे, बु० ॥ ४ ॥

व्याख्या—आर्यदेशं धर्मप्रवृत्तियुक्तं क्षेत्रं मगधादिकं ये स्पृशन्ति स्वावतारतः प्राप्नुवन्ति तेषामपि तदन्येषां किं प्रोच्यते ? तत्रापि सुतरां दुर्लभे सुकुलजन्मनां शुद्धदानादिधर्मप्रवृत्तियत्कुलेषु लब्धजन्मानस्तेषामपि । धर्मतत्त्वेऽयमेवंविधो धर्मो धर्मत्वमर्हति नान्यथेति । धर्मपरमार्थनिर्धारणे विविदिषा विज्ञातुमिच्छोद्भूतिरपि । दुर्लभा वर्तते तर्हि तथाप्रकारेण धर्मसंपादनस्य किं प्रोच्यते ? हन्तेति हे चेतन रतपरिग्रहभयाहारसंज्ञार्तिभिः रतं मैथुनं, परिग्रहो ममत्वं, भयानि इहलोकभयादीनि सप्तविधानि, आहारो भोज्यानि क्षीरदधिघृतौदनादीनि, संज्ञा तेषां रतादीनां तीव्रतीव्रतरतीव्रतमाद्यभिलाषः तेनोत्पादिता अर्तयो महापीडास्ताभिः कृत्वा । जगद्विश्ववासिप्राणिगणः । दुःस्थितत्वे निमग्नं जगते दुःखाय स्थितं दुःस्थितं तद्भावस्तत्त्वं तस्मिन् धर्मदारिद्र्यरूपजलधौ निमग्नं निमज्जितं किं धर्मवस्तु ? किं स्वरूपं ? किं मूलं ? कः समाचरणविधिः ? किं फलं ? इत्यादि विचारशून्यत्वेन भ्रमितं वर्तते, मा त्वमेवंविधो भव प्रदर्शितविचारान् कुर्वन् प्रवर्तस्वेत्यर्थः ॥ ४ ॥

विविदिपायामपि श्रवणमतिदुर्लभं धर्मशास्त्रस्य गुरुसन्निधाने ।
वितथविकथादितत्तद्रसावेशतो विविधविक्षेपमलिनेऽवधाने, बु० ॥ ५ ॥

व्याख्या—विविदिपाऽनन्तरोक्तरूपा तस्यां जातायामपि सत्यां गुरुसन्निधाने गुरुर्यथार्थधर्मज्ञो धर्मकर्ता धर्मोपदेष्टा च बहुश्रुताचार्यादिस्तत्संनिधाने तत्समीपे तन्मुखाद्विनिर्गच्छत एवंविधस्य धर्मशास्त्रस्य धर्मस्वरूपविधिफलादिप्रतिपादकं यच्छास्त्रं तस्य श्रवणं विनयबहुमानादिपुरस्सरं विधिना समाकर्णनं तदतिदुर्लभं शुश्रूपुभिरपि न प्राप्यते, तदभावे क्व धर्मप्राप्तिः। श्रवणदौर्लभ्ये हेतुं दर्शयन्नाह—वितथविकथादितत्तद्रसावेशतो वितथं विपरीतप्रतिपादनपरं मिथ्याशास्त्रं, विकथा स्त्रीभक्तराजदेशचौरकामादिरूपसरसनीरसेष्टतानिष्टतासदसद्व्यवहारचातुरीविलासादीनां क्रमेण प्रतिपादकानां ग्रंथानां जनानां चालापरूपा वा, आदिना गीतनृत्यादयो ग्राह्याः, तत्तत्तेषां तेषां श्रवणदर्शनाभ्यामुद्भूतो यो रसः प्रेमा तेन कृतो य आवेशो हृदये व्यासक्त्यानुप्रवेशोऽहंकारो वा तस्मात् विविधविक्षेपमलिने विविधा अनेकरूपा ये विक्षेपाश्चित्तस्य बहिःसमाकर्षकमनःप्रचाराः तैर्मलिने समौत्सुक्याशुद्धेऽवधाने श्रवणोपयोगे सति भावश्रवणं दुर्लभमित्यर्थः ॥ ५ ॥

अथ संयमे वीर्योल्लासदौर्लभ्यमाह—

धर्ममाकर्ण्य संबुध्य तत्रोद्यमं कुर्वतो वैरिवर्गोऽन्तरङ्गः ।
रागद्वेपश्रमालस्यनिद्रादिको बाधते निहतसुकृतप्रसंगः, बु० ॥ ६ ॥

व्याख्या—पुण्ययत्नेन भावात् धर्ममाकर्ण्य धर्मश्रवणं विधाय संबुध्य भवनैर्गुण्यं ज्ञात्वापि । तत्रोद्यमं कुर्वतो गृहीतदीक्षो भव्यजीवः संयमोद्यमं कुर्वन्नपि श्रुतिसंयमोद्यमरूपदुर्लभत्रयं प्राप्तोऽपि । रागद्वेषश्रमालस्यनिद्रादिको रागो देहोपधिशिष्याहाराद्युपरि मूर्छापरिणामः, द्वेषः कृत्यकरणे परीषहोपसर्गादिसहनेऽरुचिः, श्रमः संयमव्यापारात्क्लान्तिः, आलस्यं तपोविनयवैयावृत्त्यादिष्वनुत्साहः, निद्रा स्वाध्यायाद्यवसरे जातेऽपि स्वापः, आदिपदादक्षमानार्जवामार्दवाद्यो ग्राह्याः । अन्तरङ्ग आभ्यन्तरीयः । वैरिवर्गः प्रतिपक्षवृन्दं । कीदृशोऽयं? निहतसुकृतप्रसंगः नितरां हतो विनाशितः सुकृतप्रसंगः शुभकरणिविस्तरो येन स तथाविधः । बाधते संयमवीर्योल्लासभंगं विधत्तेऽतो दुर्लभ इत्यर्थः ॥ ६ ॥

चतुरशीतावहो योनिलक्षेष्वियं क्व त्वयाकर्णिता धर्मवार्ता ।
प्रायशो जगति जनता मिथो विवदते ऋद्धिरसशातगुरुगौरवार्ता, बुु० ॥ ७ ॥

व्याख्या—अहो अपूर्वं महाश्चर्यं हृदये चिन्तय । किं तदित्याह—हे चेतन इयमनन्तरोक्ता धर्मवार्ता धर्ममयवृत्तान्तः । चतुरशीतौ योनिलक्षेषु परिभ्रमणं कुर्वता त्वयात्मना क कस्यां योनौ आकर्णिता श्रवणविषये कृता न कस्मिन्नपि कुतो न श्रुता । यतो जगति विश्वे । जनता प्राणिगणः । प्रायशो बाहुल्येन । मिथः परस्परं । ऋद्धिरसशातगुरुगौरवार्ता ऋद्धिर्धनकुटुंबादिसंपद्, रसा मधुरादीनां स्वादिष्टता, शाता विषयादिजनितसुखशीलता, तेषां गुरु महत् यद्गौरवं सबहुमानप्रेमपरत्वं तेनैवार्ता प्रपीडिता विवदते आलापसमालापादि कुरुतेऽतः कारणाद्भावात्क तव धर्मप्राप्तिरित्यर्थः ॥ ७ ॥

उपसंहारमाह—

एवमतिदुर्लभात्प्राप्य दुर्लभतमं बोधिरत्नं सकलगुणनिधानम् ।
कुरु गुरुप्राज्यविनयप्रसादोदितं शान्तरससरसपीयूषपानम्, बु० ॥ ८ ॥

॥ इति श्रीशान्तसुधारसगेयकाव्ये बोधिभावनाविभावनो नाम द्वादशः प्रकाशः ॥

व्याख्या—एवं पूर्वोक्तप्रकारेण । अतिदुर्लभात् अतिशयेन दुर्लभं कृतप्रयत्नैरपि जनैरप्राप्यमाणं चिन्तामण्यादि तस्मादपि । दुर्लभतमं समधिकातिशयेन दुर्लभं सुरेन्द्रैरपि दातुमशक्यं सकलगुणनिधानं सकलाः समग्रा मोक्षप्राप्तिपर्यवसाना ये गुणा आत्मनो हितप्रकारास्तेषां निधानं भांडागारं ईदृशं बोधिरत्नं नरभवादिरूपधर्मसाधनसंपन्नतां । प्राप्य लब्ध्वा । त्वं गुरुप्राज्यविनयप्रसादोदितं गुरुभिरर्हद्गणभृत्स्वधर्मोपदेशकैः प्राज्यविनयः प्रचुरविनयस्तेन प्रसादपरैः सानुग्रहप्रसन्नैः उदितं जगज्जनहितकृते प्रोक्तं । शान्तरससरसपीयूषपानं सदैव सरसतायुक्तं शान्तरसामृतपानं कुरु पिबेत्यर्थः ॥ ८ ॥

॥ इति श्रीतपागच्छीयसंविग्नशाखीयपरममुनिश्रीबुद्धिविजयमुख्यशिष्यश्रीमुक्तिविजयगणिसतीर्थ्यतिलकमुनिश्रीवृद्धिविजयचरणयुगसेविना पंडितगंभीरविजयगणिना विरचितायां शान्तसुधारसटीकायां बोधिदुर्लभभावनाविभावनो नाम द्वादशः प्रकाशः समजनि ॥

## ॥ त्रयोदशः प्रकाशः ॥

उक्ता द्वादश भावनाप्रकाशाः । तेषु चात्मवर्तनानुदर्शनरूपा द्वादशानुप्रेक्षाभावनाः प्रोक्ताः । अथ त्रयोदशादिषु ध्यानसौधसमारोहणहेतुभूता मैत्र्यादयश्चतस्रो भावनाः प्रोच्यन्ते । तत्रायं प्रथमः श्लोकः—

( अनुष्टुब्वृत्तम् )

**सद्धर्मध्यानसंध्यानहेतवः श्रीजिनेश्वरैः । मैत्रीप्रभृतयः प्रोक्ताश्चतस्रो भावनाः पराः ॥ १ ॥**

व्याख्या—श्रीजिनेश्वरैः श्रीमदर्हद्भिः पराः प्रकर्षशुभपरिणामजनन्यो मैत्रीप्रभृतयो मैत्रीमादीकृत्य चतस्रश्चतुःसंख्याका भावनाः सद्र्थपर्यालोचनाभिरात्मनि विशिष्टधर्मवासनासंपादनरूपाः । सद्धर्मध्यानसंध्यानहेतवः प्रोक्ताः सत्समीचीनं पूज्यं च धर्मध्यानं धर्ममयं ध्यानमेकाग्रं मनसोऽखंडधारालक्ष्यं तस्य संधानमात्मनि संश्लिष्टरूपेण परिणमनं तस्य हेतवः संसाधिकाः प्रोक्ता जिनेश्वरैरुपदिष्टा इत्यर्थः ॥ १ ॥

ता एव नामग्राहमाह—

**मैत्रीप्रमोदकारुण्यमाध्यस्थ्यानि नियोजयेत् । धर्मध्यानमुपस्कर्तुं तद्धि तस्य रसायनम् ॥ २ ॥**

व्याख्या—धर्मध्यानमुपस्कर्तुं धर्मध्यानं प्रोक्तरूपमुपस्कर्तुं स्वात्मनि परिकर्तुं । मैत्रीप्रमोदकारुण्यमाध्यस्थ्यानि मैत्री जगज्जने हितबुद्धिः, प्रमोदो गुणिनि दृष्टे श्रुते ज्ञाते वा सानन्दभवनं, कारुण्यं दुःखितेषूपकारधीः, माध्यस्थ्यं निवारयि-

तुमशक्येऽकृत्यकारिणि रागद्वेषपरिहारेणोपेक्षणं । नियोजयेत् प्रोक्तधियः प्रवर्तयेत् । तद्धि हि निश्चितं, तत्प्रोक्तरूपमैत्र्यादिभावनं । तस्य सद्ध्यानसन्धानस्य । रसायनं परममहौषधमुपाय इति यावत् । भवतीत्यर्थः ॥ २ ॥

स्वयमेव मैत्र्यादिलक्षणमाह—

( उपजातिवृत्तम् ).

मैत्री परेषां हितचिन्तनं यद्भवेत्प्रमोदो गुणपक्षपातः ।
कारुण्यमार्तांगिरुजां जिहीर्षेत्युपेक्षणं दुष्टधियामुपेक्षा ॥ ३ ॥

व्याख्या—यद्वक्ष्यमाणरूपं । परेषामात्मव्यतिरिक्तजीवानामपि स्वात्मवत् हितचिन्तनं दुःखनिवृत्तिसुखप्राप्तिध्यानं तन्मैत्री मित्रभावो भवेत् १ । गुणपक्षपातः परेषां ज्ञानविनयदमसुखित्वादिगुणेषु पक्षपातो हर्षानन्दसंतुष्टविनोदत्वादिप्रापणं स प्रमोदो भवेत् २ । आर्तांगिरुजां जिहीर्षा कारुण्यं आर्ता नानाजातीयदुःखैरन्यतरेण पीडिताः ते च तेऽङ्गिनश्चेति प्राणिनस्तेषां या रुजो रोगसुखभंगधनहानिधर्महीनतादयस्तासां रुजां जिहीर्षाऽपहरणेच्छा कारुण्यं भवेत् ३ । दुष्टधियामुपेक्षा दुष्टा परधनपरस्त्रीहिंसान्यायाचरणे परिणता धीर्मतिर्येषां ते तथा तेषामुपेक्षा शिक्षयितुमयोग्यत्वेन परिहारवृत्तिरुपेक्षणं माध्यस्थ्यं भवेदित्यर्थः ॥ ३ ॥

अथ मैत्रीभावनां विभावयन्नाह—

सर्वत्र मैत्रीमुपकल्पयात्मन् चिन्त्यो जगत्यत्र न कोऽपि शत्रुः ।
कियद्दिनस्थायिनि जीवितेऽस्मिन्किं खिद्यते वैरिधिया परस्मिन् ॥ ४ ॥

व्याख्या—हे आत्मन् त्वं सर्वत्र सर्वस्मिन् जीवराशौ । मैत्रीं प्रोक्तरूपेण मित्रभावमुपकल्पय ऐक्यमात्मनि रचय । अनादिसिद्धात्मराशिरूपे । जगति भुवनत्रये । शत्रुर्वैरी । कोऽपि कश्चिदपि जीवः । न चिन्त्यः त्वया सर्वथा न धारणीयः । अस्मिन् वर्तमानजन्मसंबन्धिनि । कियद्दिनस्थायिनि कियतां शतवर्षादिपरिमितानां दिनानामहोरात्राणां स्थायिनि स्थितिमति । जीविते तव प्राणाधारायुषि परस्मिन् स्वस्माद्भिन्ने प्राणिनि । वैरिधियाऽरिबुद्ध्या । किं कस्यै स्वप्रयोजनसिद्ध्यै । खिद्यते संतापः क्रियते तेन न किञ्चित् सिध्यतीत्यर्थः ॥ ४ ॥

सर्वेऽप्यमी बन्धुतयानुभूताः सहस्रशोऽस्मिन् भवता भवाब्धौ ।
जीवास्ततो बन्धव एव सर्वे न कोऽपि ते शत्रुरिति प्रतीहि ॥ ५ ॥

व्याख्या—हे आत्मन् अस्मिन् साक्षादनुभूयमाने । भवाब्धौ चतुर्गतिरूपसंसारसागरे । अमी देवनरनारकपृथिव्यादितिर्यक्त्वेषु विद्यमानाः । सर्वेऽपि सूक्ष्मबादरैकेन्द्रियेभ्य आरभ्य पञ्चेन्द्रियपर्यन्ताः समस्ता अपि न तु केचिच्छेषजीवाः प्राणिनः । भवता त्वया । सहस्रशोऽनन्तवारानपि एकैकेन सह बन्धुतया स्वकीयजनकजननीभ्रातृभगिन्यादित्वेन ।

अनुजूताः स्वस्मिन् प्रोक्तसंबन्धित्वेन पूर्वं प्रापिताः सन्ति । ततस्तस्माडुक्तहेतुतः । सर्वे समग्रा अपि जीवाः । बन्धव एव स्वकीयजननीजनकादिरूपा एव सन्ति । ते तव शत्रुर्वैरी न कोऽपि कश्चिदपि नास्ति । इति प्रोक्तप्रकारेण प्रतीहि जानीह्येत्यर्थः ॥ ५ ॥

सर्वे पितृभ्रातृपितृव्यमातृपुत्राङ्गजास्त्रीभगिनीस्नुषात्वम् ।
जीवाः प्रपन्ना बहुशस्तदेतत्कुटुम्बमेवेति परो न कश्चित् ॥ ६ ॥

व्याख्यां—सर्वे समग्रा जीवाः प्राणिनः त्वदीयपितृभ्रातृपितृव्यमातृपुत्राङ्गजास्त्रीभगिनीस्नुषात्वं प्रोक्तभावमेतेऽपि त्वयि प्राप्नुवन् । बहुशोऽनन्तवारं । प्रपन्नाः त्वदाश्रयं स्वीकृतवन्तः । तदेतत् तत्प्रोक्तकारणतः एतत्सर्वजीववृन्दं कुटुम्बमेव तव परिवार एव वर्तते । इति हेतोर्न कश्चित्परः शत्रुरस्ति स्वपरिवारत्वादित्यर्थः ॥ ६ ॥

हितचिन्तनमेव मैत्री, तेन सर्वहितचिन्तनं शिक्षयन्नाह—

( इन्द्रवज्रावृत्तद्वयम् )

एकेन्द्रियाद्या अपि हन्त जीवा पञ्चेन्द्रियत्वाद्यधिगत्य सम्यक् ।
बोधिं समाराध्य कदा लभन्ते भूयो भवभ्रान्तिभियां विरामम् ॥ ७ ॥

व्याख्या—हन्तेति संबोधने हे चेतन स दिवसः कदा समेष्यति? यस्मिन् एकेन्द्रियाद्या अपि जीवाः सम्यक् पञ्चे-

न्द्रियत्वाद्यधिगत्य एकं स्पर्शनाख्यमिन्द्रियं येषां पृथ्वीकायादीनां ते एकेन्द्रियाद्याश्चतुरिन्द्रियपर्यन्ताः सर्वेऽपि जीवाः सांसारिकसत्त्वाः । सम्यक् सुष्ठु सुन्दरमिति यावत् । पञ्चेन्द्रियत्वादि स्पर्शनादिश्रोत्रपर्यन्तेन्द्रियपञ्चकयुक्तजन्मत्वं आदिशब्दात्पर्याप्तत्वसंज्ञित्वमानुषत्वार्यत्वसम्यग्दृष्टित्वसंयमित्वाराधकत्ववीतरागत्वसर्वज्ञत्वं ग्राह्यं तदधिगत्य प्रोक्तपञ्चेन्द्रियत्वादि प्राप्य । बोधिं धर्मसामग्रीं समाराध्य सम्यक् सफलां विधाय । भूयः पुनः पुनर्जायमानानां भवभ्रान्तिभियां भवे गतिचतुष्टये भ्रान्तयः परिभ्रमणानि ताभ्यो या भियो भयानि तासां भवभ्रान्तिभियां । विरामं विनिवृत्त्यवसानं । कदा कस्मिन्नहोरात्रादिकाले । लभन्ते प्राप्नुवन्ति कदा भवभ्रमणान्तप्राप्ता भविष्यन्तीत्यर्थः ॥ ३ ॥

या रागरोषादिरुजो जनानां शाम्यन्तु वाक्कायमनोद्रुहस्ताः ।
सर्वेऽप्युदासीनरसं रसन्तु सर्वत्र सर्वे सुखिनो भवन्तु ॥ ४ ॥

व्याख्या—या वक्ष्यमाणस्वरूपा जनानां प्राणिनां वाक्कायमनोद्रुहः वाचां वाणीनां कायानां शरीराणां मनसां च द्रुहो दुःखप्रापणेन द्रोहकारिण्यः । रागद्वेषादिरुजः रागो यत्र तत्र वस्तुष्वभिलाषो रोषो धर्मेऽननुकूलपदार्थेष्वरुचिस्वभाव इत्यादिना जन्ममरणशोकभयादयो ग्राह्याः ता एव रुजो द्रव्यभावरोगादिनानाव्याधयः ताः सामस्त्येन शाम्यन्तु शान्तिं यान्तु । तथा सर्वेऽपि जीवा उदासीनरसं यत्र रागद्वेषयोः पक्षो नास्ति तदुदासीनं समता तस्य रसं समतास्वादितसानुभवनं रसन्तु स्वादयन्तु । तथा सर्वे समस्तप्राणिनः । सर्वत्र सर्वद्रव्यक्षेत्रकालभावविषयेऽत्र परत्र जन्मजन्मान्तरेषु सुखिनः सुखं प्राप्ता भवन्त्वित्यर्थः ॥ ४ ॥

अथ गेयपद्याष्टकेन मैत्रीभावनां विभावयन्नाह—

विनय विचिन्तय मित्रतां त्रिजगति जनतासु ।
कर्मविचित्रतया गतिं विविधां गमितासु, वि० ॥ १ ॥

व्याख्या—हे विनय हे विविधनिवृत्तिपरिणामाभिलाषिचेतन त्रिजगति त्रिभुवने या जनताः प्राणिनां समूहास्तासु समस्तासु मित्रतां स्वजनभावेन प्रीतिस्वभावतां विचिन्तय विचित्रप्रकारेण प्रेमभावं प्राप्तो भव । किंविधासु जनतासु? कर्मविचित्रतया विविधां गतिं गमितासु कर्माणि स्वयमेव कृतानि स्वकीयानि शुभाशुभानि सातासातादिप्राप्तिहेतुभूतानि तेषां या विचित्रता तीव्रतीव्रतरतीव्रतमफलविपाकयोग्यता तया । विविधां नानारूपामेकेन्द्रियादिसूक्ष्मापर्याप्तपर्याप्तासंज्ञिसंज्ञ्यादिभेदवतीं । गतिं नरकादिके गमनागमनस्थितिरूपां गमितासु प्रापितासु सर्वत्र सर्वास्वित्यर्थः ॥ १ ॥

सर्वे ते प्रियबान्धवा न हि रिपुरिह कोऽपि ।
मा कुरु कलिकलुषं मनो निजसुकृतविलोपि, वि० ॥ २ ॥

व्याख्या—ते पूर्वोक्ताः सर्वे निःशेषाः । भवतः प्रियबान्धवाः परमवल्लभजननीजनकादिकाः सन्ति । इह जगज्जनेषु कोऽपि कश्चिदपि रिपुः सर्वत्र केवलशत्रुभावमेव प्राप्त ईदृशो न हि नैव विद्यते, किं तु जनकादित्वं प्राप्त एव

सर्वोऽस्ति । अतः कस्मिन्नपि । निजसुकृतविलोपि स्वपुण्यविनाशि । कलिकलुषं रागद्वेषादिभिः प्रकृष्टक्लिष्टं मनोऽन्तःकरणं मा कुरु मा विधेहीत्यर्थः ॥ २ ॥

**यदि कोपं कुरुते परो निजकर्मवशेन । अपि भवता किं भूयते हृदि रोषवशेन, वि० ॥ ३ ॥**

व्याख्या–हे आत्मन् यदि यदा कदाचित् कोऽपि परः स्वस्मादन्यः । निजकर्मवशेन पूर्वकाले स्वकृतवैरबुद्धिजनकक्रोधमानमोहनीयकर्मोदयवशवर्तित्वेन । कोपं कुरुते भवत उपरि रोषयुक्तो भवत्यशस्त्वात् । तर्हि भवता प्राप्तविवेकेन त्वयापि । किं रोषवशेन हृदि भूयते किं रोषवशं हृदयं कर्तव्यं । न कर्तव्यं परिज्ञातकर्मत्वादित्यर्थः ॥ ३ ॥

**अनुचितमिह कलहं सतां त्यज समरसमीन । भज विवेककलहंसतां गुणपरिचयपीन, वि० ॥ ४ ॥**

व्याख्या–हे समरसमीन कलहं त्यज हे समरससमुद्रगामिमीन जीव कलहं क्रोधाधिक्लेशं त्यज परिहर । सतां सत्पुरुषाणां कलहादिकरणं । अनुचितं उचितं योग्यं न भवति बन्धहेतुत्वात् । गुणपरिचयपीन गुणाः क्षमाद्याशमवैराग्यज्ञानादयस्तेषां यः परि सर्वतश्चयो वृद्धिर्गुणपरिचयस्तेन पीनः पुष्टस्तत्संबोधनं हे गुणपरिचयपीन । विवेककलहंसतां विवेको हिताहितादिविचारपटुर्भेदनिर्धारकृज्ज्ञानं तद्रूपा या कलहंसता क्षीरनीरपृथक्कारिता तां भज परभावतां हित्वा स्वस्वभावतां सेवस्वेत्यर्थः ॥ ४ ॥

**शत्रुजनाः सुखिनः समे मत्सरमपहाय । सन्तु गन्तुमनसोऽप्यमी शिवसौख्यगृहाय, वि० ॥ ५ ॥**

अथ गेयपद्याष्टकेन मैत्रीभावनां विभावयन्नाह—

विनय विचिन्तय मित्रतां त्रिजगति जनतासु ।
कर्मविचित्रतया गतिं विविधां गमितासु, वि० ॥ १ ॥

व्याख्या—हे विनय हे विविधनिवृत्तिपरिणामाभिलाषिचेतन त्रिजगति त्रिभुवने या जनताः प्राणिनां समूहास्तासु समस्तासु मित्रतां स्वजनभावेन प्रीतिस्वभावतां विचिन्तय विचित्रप्रकारेण प्रेमभावं प्राप्तो भव । किंविधासु जनतासु? कर्मविचित्रतया विविधां गतिं गमितासु कर्माणि स्वयमेव कृतानि स्वकीयानि शुभाशुभानि सातासातादिप्राप्तिहेतुभूतानि तेषां या विचित्रता तीव्रतीव्रतरतीव्रतमफलविपाकयोग्यता तया । विविधां नानारूपामेकेन्द्रियादिसूक्ष्मापर्याप्तपर्याप्तासंज्ञिसंज्ञ्यादिभेदवतीं । गतिं नरकादिके गमनागमनस्थितिरूपां गमितासु प्रापितासु सर्वत्र सर्वास्वित्यर्थः ॥ १ ॥

सर्वे ते प्रियबान्धवा न हि रिपुरिह कोऽपि ।
मा कुरु कलिकलुषं मनो निजसुकृतविलोपि, वि० ॥ २ ॥

व्याख्या—ते पूर्वोक्ताः सर्वे निःशेषाः । भवतः प्रियबान्धवाः परमवल्लभजननीजनकादिकाः सन्ति । इह जगज्जनेषु कोऽपि कश्चिदपि रिपुः सर्वत्र केवलशत्रुभावमेव प्राप्त ईदृशो न हि नैव विद्यते, किं तु जनकादित्वं प्राप्त एव

सर्वोऽस्ति । अतः कस्मिन्नपि । निजसुकृतविरोधि स्वपुण्यविनाशि । कलिकलुषं रागद्वेषादिभिः प्रकृष्टक्लिष्टं मनोऽन्तःकरणं मा कुरु मा विधेहीत्यर्थः ॥ २ ॥

यदि कोपं कुरुते परो निजकर्मवशेन । अपि भवता किं भूयते हृदि रोषवशेन, वि० ॥ ३ ॥

व्याख्या–हे आत्मन् यदि यदा कदाचित् कोऽपि परः स्वस्मादन्यः । निजकर्मवशेन पूर्वकाले स्वकृतवैरबुद्धिजनकक्रोधमानमोहनीयकर्मोदयवशवर्तित्वेन । कोपं कुरुते भवत उपरि रोषयुक्तो भवत्यज्ञत्वात् । तर्हि भवता प्राप्तविवेकेन त्वयापि । किं रोषवशेन हृदि भूयते किं रोषवशं हृदयं कर्तव्यं । न कर्तव्यं परिज्ञातकर्मत्वादित्यर्थः ॥ ३ ॥

अनुचितमिह कलहं सतां त्यज समरसमीन । भज विवेककलहंसतां गुणपरिचयपीन, वि० ॥ ४ ॥

व्याख्या–हे समरसमीन कलहं त्यज हे समरससमुद्रगामिमीन जीव कलहं क्रोधाधिक्लेशं त्यज परिहर । सतां सत्पुरुषाणां कलहादिकरणं । अनुचितं उचितं योग्यं न भवति बन्धहेतुत्वात् । गुणपरिचयपीन गुणाः क्षमादयाशमवैराग्यज्ञानादयस्तेषां यः परि सर्वतश्चयो वृद्धिर्गुणपरिचयस्तेन पीनः पुष्टस्तत्संबोधनं हे गुणपरिचयपीन । विवेककलहंसतां विवेको हिताहितादिविचारपटुर्भेदनिर्धारकृज्ज्ञानं तद्रूपा या कलहंसता क्षीरनीरपृथक्कारिता तां भज परभावतां हित्वा स्वस्वभावतां सेवस्वेत्यर्थः ॥ ४ ॥

शत्रुजनाः सुखिनः समे मत्सरमपहाय । सन्तु गन्तुमनसोऽप्यमी शिवसौख्यगृहाय, वि० ॥ ५ ॥

व्याख्या–शत्रुजना ये मयि वैरबुद्धियुक्ताः प्राणिनस्तेऽपि । मत्सरमपहाय विरोधमानसं धियं च विहाय । समे समभावे प्राप्ताः सन्तः सुखिनः सन्तु । अमी शत्रुजना अपि । शिवसौख्यगृहाय मोक्षसुखभावसदनप्राप्तये गन्तुं यातुं समातुराः मनसोऽभिलाषिणः सन्तु भवन्त्वित्यर्थः ॥ ५ ॥

सकृदपि यदि समतालवं हृदयेन लिहन्ति । विदितरसास्तत इह रतिं स्वत एव वहन्ति, वि० ॥ ६ ॥

व्याख्या–यदि यदा संसारिणः सत्त्वाः कथमपि सकृदपि एकशोऽप्यास्तामनेकवारं । समतालवं समतारसस्य लवं लेशं बिन्दुमात्रमिति यावत् । हृदयेन मनोभावेन । लिहन्ति रसास्वादं लभन्ते । तत एकदास्वादनतो विदितरसा विज्ञातसमतासुखरसास्वादाः सन्तः । इह समतारसे । स्वत एव परप्रेरणानिरपेक्षस्वस्वभावतः स्वयमेव रतिं प्रीतिं वहन्ति प्राप्नुवन्तीत्यर्थः ॥ ६ ॥

किमुत कुमतमदमूर्छिता दुरितेषु पतन्ति । जिनवचनानि कथं हहा न रसादुपयन्ति, वि० ॥ ७ ॥

व्याख्या–उत वितर्के विचारयेऽहं । किमिति किंनामकं तत्कारणं भविष्यति यदुद्दिश्यैते जनाः कुमतमदमूर्छिता दुरितेषु पतन्ति कुमतानि कुत्सितानि पापहेतुकान्यज्ञानादिमयत्वेन निन्दनीयानीति यावत्, मतान्यविचारितया संमतिभूतस्वस्वदर्शनपक्षाः तत्प्राप्तेर्मदो वयमेव धर्मज्ञा इत्यादिरूपो जातोऽभिमानः । तेन मूर्छिता मोहिताः सन्तः । दुरितेषु पापकर्मबन्धेषु तत्फलभूतेषु बहुलसंसारित्वनरकादिषु च । पतन्ति हीनत्वाधोगत्यादिषु समुत्सरन्ति । हहा महाकष्टं ।

कथं केनोद्देशेनेति । जिनवचनानि जिनागमोपदेशान् । रसात् प्रीत्याः प्रेमभरादिति यावत् । नोपयन्ति न प्राप्नुवन्तीत्यत एते वराका भवे कथं भविष्यन्ति ? तत्कारणमेषां मिथ्यात्वोदयमेव मन्य इत्यर्थः ॥ ७ ॥

उपसंहारमाह—

परमात्मनि विमलात्मनां परिणम्य वसन्तु । विनय समामृतपानतो जनता विलसन्तु, वि० ॥ ८ ॥

॥ इति श्रीशान्तसुधारसगेयकाव्ये मैत्रीभावनाविभावनो नाम त्रयोदशः प्रकाशः ॥ १३ ॥

व्याख्या—हे विनीतात्मन् त्वं चिन्तय विमलात्मनां सज्ज्ञानदृष्टिमज्जनानां चेतांसीत्यध्याहृत्य संबन्धनीयं, चेतांसि परमात्मनि शुद्धनिरञ्जनपूर्णब्रह्मस्वस्वरूपे परिणम्य परिपक्वनिर्भेदरूपतां प्राप्य वसन्तु निवासं कुर्वन्तु । हे सुविनीतात्मन् त्वमिति भावय इमाः जनताः सर्वजीवसमूहाः । समामृतपानतो विलसन्तु समतामृतपानाद्विलसन्तु रमणं कुर्वन्त्वित्यर्थः ॥ ८ ॥

॥ इति श्रीतपागच्छीयसंविग्नशाखीयपरममुनिश्रीवृद्धिविजयमुख्यशिष्यश्रीमुक्तिविजयगणिसतीर्थ्यतिलक-
मुनिश्रीवृद्धिविजयचरणयुगसेविना पंडितगंभीरविजयगणिना विरचितायां श्रीशान्त-
सुधारसटीकायां मैत्रीभावनाविभावनो नाम त्रयोदशः प्रकाशः समजनि ॥

## ॥ चतुर्दशः प्रकाशः ॥

उक्तस्त्रयोदशः प्रकाशः । अथ चतुर्दशः प्रोच्यते । तस्य चायं संबन्धः—त्रयोदशे प्रकाशे मैत्री कथिता, मैत्रीभावितात्मा गुणवान् भवति । गुणवांस्तु परगुणान् स्तुवन् प्रमुदितो भवतीत्यनेन संबन्धेनायातां प्रमोदभावनां विभावयन्नाह । तस्याश्चायमादिमः श्लोकः—

( स्रग्धरावृत्तम् )

धन्यास्ते वीतरागाः क्षपकपथगतिक्षीणकर्मोपरागा-<br>
स्त्रैलोक्ये गन्धनागाः सहजसमुदितज्ञानजाग्रद्विरागाः ।<br>
अध्यारुह्यात्मशुद्ध्या सकलशशिकलानिर्मलध्यानधारा-<br>
मारान्मुक्तेः प्रपन्नाः कृतसुकृतशतोपार्जितार्हन्त्यलक्ष्मीम् ॥ १ ॥

व्याख्या—हे चेतन ये क्षपकपथगतिक्षीणकर्मोपरागा ये सुकृतिनः क्षपकपथगतिः क्षपकाः समूलकापकषणविनाशेन विनाशकाः तेषां पंथा मोहनीयकर्मतरुकन्दनिष्कासनरूपमार्गः तस्मिन् या गतिः क्षपकश्रेण्याध्यारोहणरूपा प्राप्तिस्तया क्षीणो निःसत्ताकीकृतः कर्मोपरागो जीवेन्दोः कर्मराहुग्रासमालिन्यं येषां ते तथाविधाः । वीतरागाः वीतो नष्टो रागः

समप्राप्तिखापो येषां ते वीतरागाः सर्वेच्छारहिता इति यावत् ते धन्याः कृतपुण्याः । एवं सर्वत्र धन्यशब्दसंबन्धः कार्यः । त्रैलोक्ये गन्धनागाः य एव त्रैलोक्ये त्रिभुवनजनसमूहे गन्धनागा विहारपवनगन्धप्रसरमात्रप्रभावादेव प्रशमितरोगोपद्रवमारीततिरूपक्षुद्रगजेषु गन्धहस्तिनस्ते धन्याः । सहजसमुदितज्ञानजाग्रद्विरागाः सहजं पूर्वजन्मान्तरात्सार्धमागतमनादितः स्वभावजूतमपरोपदिष्टं ज्ञानं मतिश्रुतावधित्रिविधं परोक्षप्रत्यक्षविषयबोधस्तेन जाग्रत् गर्भावतारसमयादारभ्य जागरायमाणो विरागो भवनिवासाद्विरक्तता येषां ते धन्याः । तथा ये आत्मशुद्ध्या आत्मनो जीवस्य शुद्धिः सद्विवेकात्प्रवर्धमानोऽनन्तक्षमार्जवादिनिर्मलपरिणतिस्तया । सकलशशिकलानिर्मलध्यानधारामध्यारुह्य कृतसुकृतशतोपार्जितार्हन्त्यलक्ष्मीं मुक्तेरारात्प्रपन्नाः सकलः परिपूर्णमंडलपूर्णिमासत्कः शशी चन्द्रस्तस्य याः कलाः समग्रकान्तिभरयुक्तरश्मयस्तासामिव या निर्मला चलनादिसर्वदोषवर्जितविमला ध्यानयोर्धर्म्यशुक्लयोर्धाराऽन्यान्यान्तर्मुहूर्तपरिमाणरूपाणां ध्यानानामखंडा सन्ततिः तां अध्यारुह्य आधिक्येन प्रवर्धमानगुणप्रकर्षत्वेनारुह्य समारोहणं कृत्वा सुकृतानां शतानि सुकृतशतानि कृतानि निष्पादितानि सुकृतशतानि तैरुपार्जिता स्वहस्तप्राप्तकृता आर्हन्त्यलक्ष्मीं अर्हतां लक्ष्मीः सर्वपूज्यत्वप्रातिहार्यातिशयसमन्वितत्वादिरूपा विभूतिः सा आर्हन्त्यलक्ष्मीस्तां प्राप्य ये मुक्तेर्मोक्षस्य आरात् आरां भवसमुद्रान्निर्गच्छतां निरपायनिर्गममार्गाः क्षायिकगुणरत्नत्रयादिलाभरूपास्तीरप्रदेशास्तान् प्रपन्नाः संप्राप्तास्ते धन्याः सफलीकृता वरा इत्यर्थः ॥ १ ॥

तेषां कर्मक्षयोत्थैरतनुगुणगणैर्निर्मलात्मस्वभावै-
र्गायं गायं पुनीमः स्तवनपरिणतैरष्टवर्णास्पदानि ।
धन्यां मन्ये रसज्ञां जगति भगवतस्तोत्रवाणीरसज्ञा-
मज्ञां मन्ये तदन्यां वितथजनकथां कार्यमौखर्यमग्नाम् ॥ २ ॥

व्याख्या—तेषां मुक्तेस्तीरप्रपन्नानां कर्मक्षयोत्थैः कर्माणि ज्ञानदर्शनावरणमोहनीयान्तरायप्रभृतीनि तेषां यः क्षयो विनाशस्तस्मादुत्थैः समुद्भूतैः । अतनुगुणगणैः न तनवोऽनल्पा अलघवो ये गुणगणाः प्रभूता गुणराशयस्तैः । निर्मलात्मस्वभावैः निर्मलाः कर्मलेपदोषमलवर्जिता आत्मस्वभावा आत्मनश्चिद्घनजीवस्य ये स्वभावाः पूर्णज्ञानदर्शनानन्दावर्णरसस्पर्शमयत्वादिनिजसहजस्वरूपास्तैः स्तवनपरिणतैः स्तूयन्ते एभिस्तानि स्तवनानि स्तुतयस्ताभिः परिणताः स्वकल्याणेच्छया प्रोक्तगुणगणान् गृहीत्वा सत्कविः समुज्झीय समुज्झीय । अष्टवर्णास्पदानि दन्तोष्ठतालुकंठजिह्वोरोमूर्धनासिकारूपस्थानानि । पुनीमः पावनीकुर्मः । जगति विश्वे भगवतः स्तोत्रवाणीरसज्ञा या भगवतोऽर्हदादिगुणसंपूर्णस्य महापुंसः स्तोत्रवाणी स्तुतिस्तवनादिकर्तव्यतारूपवाग्व्यापारपरा रसज्ञा जिह्वा वर्तते तां । रसज्ञां रसज्ञानवतीं रसनां । धन्यां गुणज्ञां कृतार्थां च मन्ये जानामि । तदन्यां प्रोक्तगुणरसनातो भिन्नां । वितथजनकथां धर्मविमुखविपरीतबुद्धिजनास्तेषां या कथा वितथजनकथा तां । कार्यमौखर्यमग्नां तत्कर्त्रीं या मौखर्यमुखरता वाचालता तस्यां मग्ना लीना तां । अज्ञां अरसज्ञां मन्ये जानामीत्यर्थः ॥ २ ॥

निर्ग्रन्थास्तेऽपि धन्या गिरिगहनगुहागह्वरान्तर्निविष्टा
धर्मध्यानावधानाः समरससुहिताः पक्षमासोपवासाः ।
येऽन्येऽपि ज्ञानवन्तः श्रुतविततधियो दत्तधर्मोपदेशाः
शान्ता दान्ता जिताक्षा जगति जिनपतेः शासनं भासयन्ति ॥ ३ ॥

व्याख्या—ये निर्ग्रन्था मुनयः गिरिगहनगुहागह्वरान्तर्निविष्टाः गिरौ पर्वतशिखरे गहने साधारणजनदुष्प्रवेशे घनदेशे गुहायां सिंहादिश्वापदाकीर्णे वननिकुञ्जे गह्वरे गिरिगर्ते द्वन्द्वे कृते एतेषामन्तर्मध्ये निविष्टाः समासीनाः । ये च धर्मध्यानावधाना धर्मध्याने दत्तोपयोगाः । ये च समरससुहिताः स्वात्मरूपे तृप्ताः । ये च पक्षमासोपवासाः पक्षतपो मासतपः इत्यादितपःकृत्ये तत्पराः । येऽन्येऽपि पूर्वोक्तेभ्यो व्यतिरिक्ताः । ज्ञानवन्तोऽवध्यादिज्ञानं प्राप्ताः । श्रुतविततधियः श्रुतेन द्वादशांगचतुर्दशपूर्वदशपूर्वादिना वितता विशाला धीर्बुद्धिर्येषां ते । तथा ये च शान्ता जितकषायाः, दान्ता दमितान्तःकरणाः, जिताक्षा जितेन्द्रियगणाः, मोक्षगुणभाजः सन्तः । जगति भूमंडले । जिनपतेर्जिनेश्वरस्य । शासनं तीर्थं । भासयन्ति प्रभावाढ्यत्वेन दीपयन्ति तेऽपि सर्वे धन्या इत्यर्थः ॥ ३ ॥

दानं शीलं तपो ये विदधति गृहिणो भावनां भावयन्ति
धर्मं धन्याश्चतुर्धा श्रुतसमुपचितश्रद्धयाराधयन्ति ।

साध्व्यः श्राध्यश्च धन्याः श्रुतविशदधिया शीलमुद्भावयन्त्य-
स्तान्सर्वान्मुक्तगर्वाः प्रतिदिनमसकृद्भाग्यभाजः स्तुवन्ति ॥ ४ ॥

व्याख्या—ये वक्ष्यमाणगुणभाजः दानमभयसुपात्रादिपञ्चविधं । शीलं देशतः सर्वतो वा ब्रह्मचर्यं । तपोऽनशनादि द्वादशविधं । विदधति कुर्वन्ति । भावनामनित्यादिकां तीर्थोद्धरणदीनोद्धरणादिशुभमनोरथरूपां भावनां भावयन्ति चेतसा चिन्तयन्ति । तथा श्रुतसमुपचितश्रद्धया आगमानुसारिण्या पुष्टनिश्चलश्रद्धया । चतुर्धा धर्मं चतुर्विधं धर्मं प्रोक्तरूपं आराधयन्ति शुद्धविधिना पालयन्ति । ते गृहिणः श्राद्धा धन्याः । तथा साध्व्यो व्रतिन्यः श्राध्यश्च देशतो व्रतिन्यो नार्योऽपि । याः श्रुतविशदधिय आगमोपदेशेन कृतशुद्धया श्रद्धया । शीलं समग्रधर्माचरणं ब्रह्मव्रतं च । उद्भावयन्त्यो निर्दोषपालनया शोभयन्त्यस्ता धन्या भाग्यवत्यः । ये च तान् पूर्वोदितान् सर्वान् जिनादिश्राविकापर्यन्तान् । मुक्तगर्वाः त्यक्ताभिमानाः । भाग्यभाजः पुण्यशालिनः । प्रतिदिनं दिने दिने । असकृदनेकवारं स्तुवन्ति सद्गुणख्यापनेन वर्णयन्ति तेऽपि जना धन्या इत्यर्थः ॥ ४ ॥

आस्तां सम्यक्त्वयुक्तगुणवन्नारीस्तवनं, किं तु सारतावद्गुणं मिथ्यादृशामप्यनुमोदयन्नाह—

( उपजातिवृत्तम् )

मिथ्यादृशामप्युपकारसारं संतोषसत्यादिगुणप्रसारम् ।
वदान्यता वैनयिकप्रकारं मार्गानुसारीत्यनुमोदयामः ॥ ५ ॥

व्याख्या—उपकारसारं उपकारोऽन्येषामपि हितसुखादिसंपादनस्वभावः स सारः प्रधानो यस्य स तथा तं । संतोषसत्यादिगुणप्रसरं संतोषो येन तेन यथा तथा न्यूनपूर्णादिना संतुष्टिभवनस्वभावः, सत्यं हितमितयाथार्थ्यादिवचनं, आदिपदात् क्षमार्जवमार्दवनिःस्पृहत्वादयो ग्राह्याः, त एव गुणाः स्वपरहितफलजीवधर्माः तेषां यः प्रसरो विस्तारस्तं । तथा वदान्यं दातृत्वं वैनयिकप्रकारं विनयो नम्रवृत्तिः स एव वैनयिकस्तत्प्रकारप्राप्तं गुणं । मार्गानुसारी अहोऽस्य मिथ्यादृशोऽपि मोक्षमार्गस्यानुकूलता वर्तते इति कृत्वाऽनुमोदयामः ज्ञात्वा हृदयेन सानन्दा भवाम इत्यर्थः ॥ ५ ॥

( स्रग्धरावृत्तम् )

जिह्वे प्रह्वीभव त्वं सुकृतिसुचरितोच्चारणे सुप्रसन्ना
भूयास्तामन्यकीर्तिश्रुतिरसिकतया मेऽद्य कर्णौ सुकर्णौ ।
वीक्ष्यान्यप्रौढलक्ष्मीं द्रुतमुपचिनुतं लोचने रोचनत्वं
संसारेऽस्मिन्नसारे फलमिति भवता जन्मनो मुख्यमेव ॥ ६ ॥

व्याख्या—हे जिह्वे हे रसने त्वं स्वसौभाग्यवृद्ध्यै सुप्रसन्ना कस्यचिदप्यपवादाद्युच्चरणदोषमलवर्जितसंतुष्टा सती । सुकृतिसुचरितोच्चारणे सुष्ठु शोभना कृतिः पवित्रधर्मः पुण्याचरणं चास्ति एषामिति सुकृतिनस्तेषां यानि सुचरितानि दानशीलतपःसंयमज्ञानवैराग्यादिसमाचरणानि तेषां यदुच्चारणं सानन्दजल्पनं तस्मिन्नहोनिशाकरणे प्रह्वीभव नम्रा

आमका सज्जा सदोद्यमवतीति यावत् भव प्रवृत्तिमती तिष्ठ । अद्य सांप्रतजन्मनि मे मम कर्णौ श्रवणद्वयं अन्यकीर्तिश्रुतिरसिकतया अन्यकीर्तिः अन्येषां आत्मव्यतिरिक्तानां या कीर्तिर्निर्मलगुणजन्ययशःख्यातिः तस्या या श्रुतिः परजनैः क्रियमाणायाः समाकर्णनं तस्यां या रसिकता प्रेमपरता तया कृत्वा सुकर्णौ श्रवणसावधाननिर्माणसाफल्ययुक्तौ भूयास्तां भवेतां । अन्यप्रौढलक्ष्मीं वीक्ष्य अन्येषां स्वस्माद्भिन्नानां शत्रुमित्राणां प्रौढां महाविशालां लक्ष्मीं धनकुटुंबपूजामहिमरूपारोग्यादिसंपदं प्रेक्ष्य । लोचने मम नेत्रयुग्मं । द्रुतं शीघ्रं । रोचनत्वमुत्तमरुचिजननत्वं । उपचिनुतं प्रवृद्धिं प्रापयतां । अस्मिन् दृश्यमाने असारे तृप्तिरूपसारवर्जिते संसारे भवे भवतां रसनाश्रवणचक्षुषां जन्मनो रचनोद्भवस्य मुख्यं प्रधानं । फलं कार्यमेतदेवेत्यर्थः ॥ ६ ॥

( उपजातिवृत्तम् )

प्रमोदमासाद्य गुणैः परेषां येषां मतिः मज्जति साम्यसिन्धौ ।
देदीप्यते तेषु मनःप्रसादे गुणास्तथैते विशदीभवन्ति ॥ ७ ॥

व्याख्या—येषां सुज्ञपुरुषाणां मतिर्बुद्धिः । परेषां स्वस्मादन्यगुणिजनानां । गुणैः प्रोक्तरूपैः । प्रमोदं हर्षोल्लासं । आसाद्य प्राप्य । साम्यसिन्धौ समताभावरूपे संतोषसमुद्रे । मज्जति मग्नतां प्राप्ता भवति । तेषु परगुणज्ञजनेषु विषये । मनःप्रसादो मनसः शुद्धिः । देदीप्यते अतिशयेन समुज्ज्वलतां प्राप्तः सन् शोभते । तथा एते गुणा अनुमोदिता गुणाः प्रोक्तस्वरूपाः । विशदीभवन्ति पूर्वं मलिना अपि निर्मलशुद्धरूपा भवन्तीत्यर्थः ॥ ७ ॥

अथ गेयपद्याष्टकेन प्रमोदभावनां विभावयन्नाह—

विनय विभावय गुणपरितोषं निजसुकृताप्तवरेषु परेषु ।
परिहर दूरं मत्सरदोषं विनय विभावय गुणपरितोषम् ॥ १ ॥

व्याख्या—हे विनय हे विनीत मुमुक्षो त्वं । गुणपरितोषं परेषां सुखित्वादिगुणेषु परितोषं परि सर्वतः तोषं संतुष्टचित्तत्वं । विभावय पुनः पुनश्चिन्तय धारय कुरुष्वेति यावत् । केन साधनेनेत्याह—निजसुकृताप्तवरेषु निजानि स्वयं निष्पादितानि पूर्वाधुनिकजन्मभिः सुकृतानि सदाचारासेवनानि तैराप्तं प्राप्तं वरत्वं पुण्यादिना प्रधानत्वं यैस्ते तथा तेषु । परेषु स्वभिन्नप्रकृष्टपुण्यवत्प्राणिषु । मत्सरदोषं मत्सरः परेषां सुखर्ध्यादिष्वसहनस्वभावता । दूरमत्यन्तं । परिहर त्यागमन्यभावं कुर्वित्यर्थः ॥ १ ॥

दिष्ट्यायं वितरति बहुदानं वरमयमिह लभते बहुमानम् ।
किमिति न विमृशसि परपरभागं यद्विभजसि तत्सुकृतविभागम्, वि० ॥ २ ॥

व्याख्या—अयं देवदत्तादिः दिष्ट्या भाग्यवशिधतया बहुदानं बहु सुप्रचुरं दानमभयसुपात्रादिकं वितरति ददातीत्यतो धन्योऽयं । अयं यज्ञदत्तादिः । इह मनुष्यलोके धर्मिन्यायिसदाचारिपुण्यत्वादिना बहुमानसत्कारपूजाप्रतिष्ठादिकं लभते प्राप्नोति । तद्वरं श्रेष्ठं मन्येऽस्य योग्यत्वात् । किमिति हे जीव त्वं । इति प्रोक्तप्रकारं किं कस्मान्न विमृशसि न चिन्तन-

आसक्ता सक्ता सदोद्यमवतीति यावत् भव प्रवृत्तिमती तिष्ठ । अद्य सांप्रतजन्मनि मे मम कर्णौ श्रवणद्वयं अन्यकीर्तिश्रुतिरसिकतया अन्यकीर्तिः अन्येषां आत्मव्यतिरिक्तानां या कीर्तिर्निर्मलगुणजन्ययशःख्यातिः तस्या या श्रुतिः परजनैः क्रियमाणायाः समाकर्णनं तस्यां या रसिकता प्रेमपरता तया कृत्वा सुकर्णौ श्रवणसावधाननिर्माणसाफल्ययुक्तौ भूयास्तां भवेतां । अन्यमौढलक्ष्मीं वीक्ष्य अन्येषां स्वस्माद्भिन्नानां शत्रुमित्राणां प्रौढां महाविशालां लक्ष्मीं धनकुटुंबपूजामहिमरूपारोग्यादिसंपदं प्रेक्ष्य । लोचने मम नेत्रयुग्मं । द्रुतं शीघ्रं । रोचनत्वमुत्तमरुचिजननत्वं । उपचिनुतं प्रवृद्धिं प्रापयतां । अस्मिन् दृश्यमाने असारे तृप्तिरूपसारवर्जिते संसारे भवे भवतां रसनाश्रवणचक्षुषां जन्मनो रचनोद्भवस्य मुख्यं प्रधानं । फलं कार्यमेतदेवेत्यर्थः ॥ ६ ॥

(उपजातिवृत्तम्)

प्रमोदमासाद्य गुणैः परेषां येषां मतिः सज्जति साम्यसिन्धौ ।
देदीप्यते तेषु मनःप्रसादे गुणास्तथैते विशदीभवन्ति ॥ ७ ॥

व्याख्या—येषां सुज्ञपुरुषाणां मतिर्बुद्धिः । परेषां स्वस्मादन्यगुणिजनानां । गुणैः प्रोक्तरूपैः । प्रमोदं हर्षोल्लासं । आसाद्य प्राप्य । साम्यसिन्धौ समताभावरूपे संतोषसमुद्रे । सज्जति मग्नतां प्राप्ता भवति । तेषु परगुणज्ञजनेषु विषये । मनःप्रसादो मनसः शुद्धिः । देदीप्यते अतिशयेन समुज्ज्वलतां प्राप्तः सन् शोभते । तथा एते गुणा अनुमोदिता गुणाः प्रोक्तस्वरूपाः । विशदीभवन्ति पूर्वं मलिना अपि निर्मलशुद्धरूपा भवन्तीत्यर्थः ॥ ७ ॥

अथ गेयपद्याष्टकेन प्रमोदभावनां विभावयन्नाह—

विनय विभावय गुणपरितोषं निजसुकृताप्तवरेषु परेषु ।
परिहर दूरं मत्सरदोषं विनय विभावय गुणपरितोषम् ॥ १ ॥

व्याख्या–हे विनय हे विनीत मुमुक्षो त्वं । गुणपरितोषं परेषां सुखित्वादिगुणेषु परितोषं परि सर्वतः तोषं संतुष्टचित्तत्वं । विभावय पुनः पुनश्चिन्तय धारय कुरुष्वेति यावत् । केन साधनेनेत्याह–निजसुकृताप्तवरेषु निजानि स्वयं निष्पादितानि पूर्वाधुनिकजन्मभिः सुकृतानि सदाचारासेवनानि तैराप्तं प्राप्तं वरत्वं पुण्यादिना प्रधानत्वं यैस्ते तथा तेषु । परेषु स्वभिन्नमकृष्टपुण्यवत्प्राणिषु । मत्सरदोषं मत्सरः परेषां सुखर्ध्यादिष्वसहनस्वभावता । दूरमत्यन्तं । परिहर त्यारमन्यभावं कुर्वित्यर्थः ॥ १ ॥

दिष्ट्यायं वितरति बहुदानं वरमयमिह लभते बहुमानम् ।
किमिति न विमृशसि परपरभागं यद्विभजसि तत्सुकृतविभागम्, वि० ॥ २ ॥

व्याख्या–अयं देवदत्तादिः दिष्ट्या भाग्यवशितया बहुदानं बहु सुप्रचुरं दानमभयसुपात्रादिकं वितरति ददातीत्यतो धन्योऽयं । अयं यज्ञदत्तादिः । इह मनुष्यलोके धर्मिन्यायिसदाचारिपुण्यत्वादिना बहुमानसत्कारपूजाप्रतिष्ठादिकं लभते प्राप्नोति । तद्वरं श्रेष्ठं मन्येऽस्य योग्यत्वात् । किमिति हे जीव त्वं । इति प्रोक्तप्रकारं किं कस्माच्च विमृशसि न चिन्तन-

विषये प्रणिदधासि नांगीकरोषीति यावत् । तत्किमित्याह—परपरभागं परस्य सुकृतिनो देवदत्तादेः परभागं परं प्रकृष्टमुत्तमोत्तमं भागं सेवाभक्तिदातृत्वबहुमानादिहेतुप्रकर्षपुण्यकर्मोदयं । तत्स्वहृदयेऽनुमोदय यद्विभजसि यद्यस्मात्परसुकृतानुमोदनात् तत्सुकृतविभागं विभजसि तत्तस्य पुण्यकार्यकर्तुर्यत्सुकृतं शुभकृत्यसेवनफलं तस्य विभागं विशिष्टो भागोऽनुमोदनपरिणामहेतोः तुल्यफलं फलार्धं फलत्रिभागादिरूपोपार्जनं विभजसि लभसे इत्यर्थः ॥ २ ॥

येषां मन इह विगतविकारं ये विदधति भुवि जगदुपकारम् ।
तेषां वयमुचिताचरितानां नाम जपामो वारंवारम्, वि० ॥ ३ ॥

व्याख्या—इह मनुष्यलोके येषां मुमुक्षूणां । मनश्चित्तं विगतविकारं विगतो विनष्टो विकारो रागद्वेषादिपरिणामो यस्य तत्तथा । तथा ये बहुश्रुतादयो भुवि विश्वे । जगदुपकारं सर्वजनस्योपकारं । विदधति कुर्वन्ति । तेषां प्रोक्तगुणभाजां । उचिताचरितानां उचितं स्वस्वानुरूपं योग्यं आचरितं कर्तव्यमस्ति येषां ते तथा तेषां प्रोक्तरूपाणां नाम अभिधानाक्षराणि वयं वारंवारं बहुशो जपामो भजाम इत्यर्थः ॥ ३ ॥

अहह तितिक्षागुणमसमानं पश्यत भगवति मुक्तिनिदानम् ।
येन रुषा सह लसदभिमानं झटिति विघटते कर्मवितानम्, वि० ॥ ४ ॥

व्याख्या—अहह महाचमत्कारकारणं यूयं पर्यालोचयत । किं तदित्याह—भगवति जिनेश्वरे । मुक्तिनिदानं मुक्तेर्मोक्षस्य

निदानं शुक्लध्यानालंबनत्वेन मुख्यसाधनं । तितिक्षागुणमसमानं तितिक्षा क्रोधाभावेन परकृतापमानोपसर्गादिप्राणवियोगफलकशीतोष्णक्षुत्तृड्दंशादिद्वन्द्वसहनशीलता क्षमा सैव गुणो हितप्राप्तिप्रकारस्तं असमानं कीदृशं ? अतुलं अनन्यसदृशं समताभावं तं पश्यत हृदयदृशा विलोकयत । येन तितिक्षागुणेन । वसदभिमानं वसन् वृद्धिं गच्छन् वर्धमान इत्यर्थः अभिमानः अभिनवकर्मणां ज्ञानावरणीयाद्यष्टानां निदानं निश्चितसंततमुख्यबन्धहेत्वनादियोग्यत्वजीवस्वभावस्तदपि रुषा सह क्रोधक्षयेण सार्धमेव झटिति शीघ्रमेकहेलया विघटतेऽन्यप्रयत्नं विनैव क्षमामात्रादेव स्वतो विनश्यतीत्यर्थः ॥४॥

अदधुः केचन शीलमुदारं गृहिणोऽपि परिहृतपरदारम् ।
यश इह संप्रत्यपि शुचि तेषां विलसति फलिताफलसहकारम्, वि० ॥ ५ ॥

व्याख्या—केचन कियन्तः गृहिणोऽपि गृहस्थश्राद्धा अपि परिहृतपरदारं परिहृता वर्जिताः परदाराः परपरिगृहीताः स्त्रियो यस्मिंस्तत्तथाविधं । उदारं निरतिचारत्वेन श्रेष्ठं । शीलं देशतः सर्वतश्च ब्रह्मचर्यं । अदधुर्धृतवन्तः धारयन्ति च । तेषां गृहिणामपि सुदर्शनसुभद्रादीनां । इह मनुष्यलोके । शुचि पवित्रं । फलिताफलसहकारं फलितं फलसमृद्धिंसंप्राप्तं अफलं पुष्पितं सहकारमाम्रतरुसदृशं । यशः कीर्तिः । संप्रत्यपि वर्तमानसमयेऽपि विलसति विशेषेण दीप्तं सत् शोभते इत्यर्थः ॥ ५ ॥

या वनिता अपि यशसा साकं कुलयुगलं विदधति सुपताकम् ।
तासां सुचरितसञ्चितराकं दर्शनमपि कृतसुकृतविपाकम्, वि० ॥ ६ ॥

व्याख्या—याः काश्चन वनिताः स्त्रियोऽपि यशसा साकं यशसा सुशीलसदाचारगांभीर्यक्षमाविनयादिस्वगुणजन्यकीर्तिप्रसरेण साकं सार्धमेव । कुलयुगलं कुलयोः पितृवंशश्वशुरवंशयोर्यद्युगलं युग्मं तत्तथाभूतं । सुपताकं शोभनाः पताका जननयनहृदयानन्दजनकशोभावर्धकध्वजश्रेण्यस्ताभिर्मण्डितं सदनमिव शोभितं यस्मिंस्तत्तथाभूतं । विदधति कुर्वन्ति । तासां प्रोक्तगुणशालिनीनां सुचरितसञ्चितराकं सुष्ठु सुन्दराणि चरितानि व्रतदानाद्याचरणानि तान्येव सञ्चितराकं संगृहीतं राशीकृतं राकं काञ्चनं तत्तथाभूतं । दर्शनमपि तासां कर्तव्यमुखदेहोपकरणादीनां विलोकनमपि । कृतसुकृतविपाकं संप्रापितपुण्यफलं मन्य इत्यर्थः ॥ ६ ॥

तात्त्विकसात्त्विकसुजनवतंसाः केचन युक्तिविवेचनहंसाः ।
अलमकृषत किल भुवनाभोगं स्मरणममीषां कृतशुभयोगम्, वि० ॥ ७ ॥

व्याख्या—ये केचन ये केऽपि नरमुकुटमणयः पुरुषाः । तात्त्विकसात्त्विकसुजनवतंसा याथार्थ्यानारोपितवस्तुस्वरूपं तत्त्वं स्वयं तत्त्वं विदन्ति परेभ्य उपदिशन्ति ये ते तात्त्विकाः, सात्त्विका धर्मादिवस्तुनिर्धारणे संपादने च सद्व्यवसायो विद्यते येषां ते सात्त्विकाः, सुजनाः न्यायधर्मज्ञानादिसमृद्धा ये जनाः प्राणिनस्ते तथा तेषु येऽवतंसा मूर्धन्यास्तेषां । तथा ये युक्तिविवेचनहंसाः युक्तयः स्वशास्त्रेतरशास्त्रवचनानां युक्तायुक्तत्वपरीक्षणे वस्तुस्वरूपेण सह घटनाः तासां विवेचनं यथार्थायथार्थयोर्निर्धारणं पृथक्करणं तस्मिन् हंसाः क्षीरनीरयोरसंयुक्तत्वकारकमरालचञ्चुधर्मधियस्तेषां । किल भुवनाभोगमलमकृषत किल सकलजनप्रसिद्धं भुवनाभोगं भुवनानां जगत्त्रयाणां आभोगः परिपूर्णहृदयभावस्तं

प्रोक्तगुणैः अलमत्यर्थं अकृषत आकर्षितवन्त आकर्षन्ति आकर्षयिष्यन्ति । तेषाममीषां प्रौढपुण्यवन्यानां दूरासन्नवर्तिनां स्मरणं चिन्तनमप्यस्माकं कृतशुभयोगं दत्तपुण्यबन्धमस्तीत्यर्थः ॥ ७ ॥

अथोपसंहारमाह—

इति परगुणपरिभावनसारं सफलय सततं निजमवतारम् ।
कुरु सुविहितगुणनिधिगुणगानं विरचय शान्तसुधारसपानम्, वि० ॥ ८ ॥

॥ इति श्रीशान्तसुधारसगेयकाव्ये प्रमोदभावनाविभावनो नाम चतुर्दशः प्रकाशः ॥ १४ ॥

व्याख्या—इति प्रोक्तप्रकारेण परगुणपरिभावनसारं परेऽन्ये स्वस्माद्भिन्ना जनाः तेषां ये गुणाः परोपकारप्राधान्यादयः तेषां यत्परिभावनं स्वमनसि तैः रमणरतिजननं तदेव सारं सफलत्वकारणं यस्य स तथा तं । निजं स्वकीयं अवतारं जन्म । सततं निरन्तरं परिभावयन् सफलय सार्थकं कुरु । सुविहितगुणनिधिगुणगानं कुरु तथा सुविहितं चावश्यकादिसर्वकृत्यं येषां ते तथा त एव गुणनिधयो गुणनिधानानि तेषां गुणगानं सद्गुणोत्कीर्तनं कुरु विधेहि । शान्तसुधारसपानं विरचय रागादिविकारविरहितो भूत्वा शान्तस्वभावे विविधप्रेमभरेण विनोदं भजेत्यर्थः ॥ ८ ॥

॥ इति श्रीतपागच्छीयसंविग्नशाखीयपरममुनिश्रीवृद्धिविजयमुख्यशिष्यश्रीमुक्तिविजयगणिसतीर्थ्यतिलकमुनिश्रीवृद्धिविजयचरणयुगसेविना पंडितगंभीरविजयगणिना विरचितायां श्रीशान्तसुधारसटीकायां प्रमोदभावनाविभावनो नाम चतुर्दशः प्रकाशः समजनि ॥

## ॥ पञ्चदशः प्रकाशः ॥

उक्तश्चतुर्दशः प्रकाशः । अथ पञ्चदशः प्रोच्यते । तस्य चायमभिसंबन्धः । चतुर्दशे प्रमोदभावना प्रोक्ता । तां च भावयन् करुणाश्रितहृदयो भवति । स च कारुण्यं भावयतीत्यतः कारुण्यभावनां विभावयन्नाह । तस्याश्चायमादिमः श्लोकः

( मालिनीवृत्तम् )

प्रथममशनपानप्राप्तिवाञ्छाविहस्तास्तदनु वसनवेश्मालंकृतिव्यग्रचित्ताः ।
परिणयनमपत्यावाप्तिमिष्टेन्द्रियार्थान् सततमभिलषन्तः स्वस्थतां क्वाश्नुवीरन् ॥ १ ॥

व्याख्या—तावच्चित्तस्वास्थ्ये दुर्लभं दर्शयति । येऽप्राप्तकारुण्यास्ते दुःखिनः सन्तः प्रथमं प्रभूतनिर्धनतायामादौ अशनपानप्राप्तिवाञ्छाविहस्ता अशनमोदनादि पानं स्वादुशीतलजलदुग्धसिताद्राक्षापानीयमदिरासवादि तयोरप्राप्तयोः प्राप्तिस्तस्या वाञ्छाऽभिलापस्तेन विहस्ताः समातुरत्वेन व्याकुला भवन्ति । तदनु वसनवेश्मालंकृतिव्यग्रचित्ताः तदनु कथञ्चि-ज्जाताशनपानप्राप्तेः पश्चात् वसनानि चीनांशुककंबलादीनि वेश्मानि धवलगृहाट्टालकापणादीनि अलंकृतयः कटककुंभ-लनूपुरादयः तासां प्राप्तये व्यग्रचित्ताः विविधान्यग्राणि स्त्रीपुत्रदुहितृस्नुपादिचिन्तनीयवस्तूनि येषां चित्तेषु ते व्यग्र-चित्ता व्याकुला भवन्ति । तथा कथञ्चिद्वस्त्रादिप्राप्तौ सत्यां परिणयनमपत्यावाप्तिमिष्टेन्द्रियार्थान् परिणयनं स्वपरवि-

पातुमिच्छन्तः अपत्यावाप्तिं सन्तानप्राप्तिमिच्छन्तः इष्टेन्द्रियार्थान् इष्टान् स्वस्य प्रियान् इन्द्रियार्थान् शब्दरूपगन्धरसस्पर्शान् पञ्चेन्द्रियविषयभोगानिच्छन्तः । सततमभिलषन्तो निरन्तरं पूर्वोक्तसर्ववस्तुप्राप्तिचिन्ताव्याकुलाः सन्तः आशु शीघ्रं स्वस्थतां मनःस्थैर्यं क्व अश्नुवीरन् क्व प्राप्नुवन् लभेरन्? न क्वापि। अप्राप्तस्थैर्ये मनसि कीदृशी करुणेत्यर्थः ॥ १ ॥

( शिखरिणीवृत्तम् )

उपायानां लक्षैः कथमपि समासाद्य विभवं भवाभ्यासात्तत्र ध्रुवमिति निबध्नाति हृदयम् ।
अथाकस्मादस्मिन् विकिरति रजः क्रूरहृदयो रिपुर्वा रोगो वा भयमुत जरा मृत्युरथवा ॥ २ ॥

व्याख्या—कथमपि महता कष्टप्रबन्धेन उपायानां लक्षैः उपायाः धनादिप्राप्तेः साधका वाणिज्यविदेशगमनखनिखननादयस्तेषां यानि लक्षाणि सुतरामतिप्रभूतानि तैः कृत्वा । विभवं पुण्यसंबन्धानुसारेण प्रचुरलक्ष्मीं । समासाद्य प्राप्य । भवाभ्यासात् अनादितोऽनन्तभवधनप्रेमपरिचयात् । तत्र धनोपरि ध्रुवमिति क्षणविनश्वरमप्येतद्धनं ध्रुवं मे सदास्थायि कथं भवेदित्येवं हृदयं मानसं निबध्नाति संधाय यावत्तिष्ठति तावत्तस्य कथा जीवनवार्ता प्रबन्धे । तथाऽस्मिन् धनसंपद्दे । अकस्मात् अचिन्तितमेकपदे । क्रूरहृदयः दुष्टचित्तः । रिपुः शत्रुः । वाऽथवा । रोग आशुविनाशकशूलादिव्याधिर्वा । उत भयं परचक्राद्यापतनं । जरा वयोवार्धक्यं । अथवा मृत्युर्मरणं रजो धूलीं विकिरति विक्षिपति सर्वं विनाशं नयति तदा तस्य कारुण्यं क्व संभवतीत्यर्थः ॥ २ ॥

( स्रग्धरावृत्तम् )

स्पर्धन्ते केऽपि केचिद्दधति हृदि मिथो मत्सरं क्रोधदग्धा
युध्यन्ते केऽप्यरुद्धा धनयुवतिपशुक्षेत्रपद्मादिहेतोः ।
केचिल्लोभाल्लभन्ते विपदमनुपदं दूरदेशानटन्तः
किं कुर्मः किं वदामो भृशमरतिशतैर्व्याकुलं विश्वमेतत् ॥ ३ ॥

व्याख्या—अस्मिन् जगति कारुण्यवर्जिता जीवाः केऽपि कियन्तः मिथः परस्परं स्पर्धन्ते स्वस्मिन् संहर्षिताः सन्तः परेभ्यः समधिका भवितुमिच्छन्ति परेषां पराजयकामनाभृतश्च वर्तन्ते । केचिच्च क्रोधदग्धाः कोपाग्निना भस्मीकृतविवेकजीवना मिथो मत्सरं परेषां सुखादिवृद्ध्यसहनस्वभावतां हृदि चित्ते दधति मनसा निर्धारयन्तस्तिष्ठन्ति । तथा केऽपि प्रोक्तेभ्योऽन्ये धनयुवतिपशुक्षेत्रपद्मादिहेतोः धनं काञ्चनादि, युवतिः कुमारी स्वपरविवाहिता वा स्त्री, पशुर्गजवाजिवृषभादिः, क्षेत्राणि सस्योत्पत्तिभूमयः, पद्मानि ग्रामनगरादीनि, आदिना राज्यमंत्रत्वादयो ग्राह्याः, द्वन्द्वे कृते एतेषां हेतोः संहरणविनाशादिकारणतः । अरुद्धा अनिवार्यक्रोधग्रस्ताः । युध्यन्ते पांडवकौरवादिवत्संग्रामयन्ति । तथा केचित्प्रोक्तेभ्योऽपरे लोभाद्धनाशावशात् दूरदेशानटन्तो दूरे जलधिमहारण्यं समुल्लंघ्य स्थिता ये देशा जनपदास्तान् अटन्तः परिभ्रमणं कुर्वन्तः । अनुपदं स्थाने स्थाने विपदं महापत्तिं लभन्ते प्राप्नुवन्ति । तथाभूते जगति करुणोत्पादाय वयं किं

गुर्मः किंनामकं समर्थोपायमाश्रयामः ? किं वदामः किंनामकं जगद्धितमुपदेशं दद्मः ? तन्न जानीमः । एतस्मात्स्वद्दृश्यमानं विश्वं भुवनत्रयं । अरतिशतैः पीडोद्वेगदुःखानां शतशः समूहैः भृशमत्यर्थं व्याकुलं करुणास्पदविह्वलं पतते इत्यर्थः ॥ ३ ॥

( उपजातिवृत्तत्रयम् )

स्वयं खनन्तः स्वकरेण गर्तां मध्ये स्वयं तत्र तथा पतन्ति ।
तथा ततो निष्क्रमणं तु दूरेऽधोऽधःप्रपाताद्विरमन्ति नैव ॥ ४ ॥

व्याख्या— जो जव्या अयं विश्वजनः तथा तेन प्रकारेण । स्वकरेण निजहस्तेन आत्मनैवेति यावत् । गर्तां महाखातिकां । स्वयं स्वकीयेनारंभप्रवृत्तिस्वभावेन नेश्वरादिप्रेरणया खनन्तोऽधस्तनतलप्रदेशं विदारयन्तः । यथा येन तत्प्राप्यभावेन । ततो गर्तामध्यभागात् निष्क्रमणं तु निर्गमस्तु दूरेऽस्तु परं तु अधोऽधःप्रपातादपि नैव विरमन्ति नीचैर्नीचैर्गच्छन्त्येव विरमन्ति नीचैर्गमनस्यापि अवसानं नैव प्राप्नुवन्ति सुतरामनन्तसंसारत्वं व्रजन्तीत्यर्थः ॥ ४ ॥

प्रकल्पयन्नास्तिकतादिवादमेवं प्रमादं परिशीलयन्तः ।
मग्ना निगोदादिषु दोषदग्धा दुरन्तदुःखानि हहा सहन्ते ॥ ५ ॥

व्याख्या—हहा महाकष्टं अज्ञाः सद्बोधविकला मिथ्यादृष्टयो व्याकरणतर्कसाहित्यादिनिर्लब्धवादशक्तयो यथार्थवस्तुस्वरूपसारज्ञानवर्जिता वाचाटा इति यावत् । नास्तिकतादिवादं प्रकल्पयन् नास्तिकता पञ्च वा भूतचतुष्टयं विद्या-

( स्रग्धरावृत्तम् )

स्पर्धन्ते केऽपि केचिद्दधति हृदि मिथो मत्सरं क्रोधदग्धा
युध्यन्ते केऽप्यरुद्धा धनयुवतिपशुक्षेत्रपद्रादिहेतोः ।
केचिल्लोभाल्लभन्ते विपदमनुपदं दूरदेशानटन्तः
किं कुर्मः किं वदामो भृशमरतिशतैर्व्याकुलं विश्वमेतत् ॥ ३ ॥

व्याख्या—अस्मिन् जगति कारुण्यवर्जिता जीवाः केऽपि कियन्तः मिथः परस्परं स्पर्धन्ते स्वस्मिन् संहर्षिताः सन्तः परेभ्यः समधिका भवितुमिच्छन्ति परेषां पराजयकामनाभृतश्च वर्तन्ते । केचिच्च क्रोधदग्धाः कोपाग्निना भस्मीकृतविवेकजीवना मिथो मत्सरं परेषां सुखादिवृद्ध्यसहनस्वभावतां हृदि चित्ते दधति मनसा निर्धारयन्तस्तिष्ठन्ति । तथा केऽपि प्रोक्तेभ्योऽन्ये धनयुवतिपशुक्षेत्रपद्रादिहेतोः धनं काञ्चनादि, युवतिः कुमारी स्वपरविवाहिता वा स्त्री, पशुर्गजवाजिवृषभादिः, क्षेत्राणि सस्योत्पत्तिभूमयः, पद्राणि ग्रामनगरादीनि, आदिना राज्यमंडलादयो ग्राह्याः, द्वन्द्वे कृते एतेषां हेतोः संहरणविनाशादिकारणतः । अरुद्धा अनिवार्यक्रोधग्रस्ताः । युध्यन्ते पांडवकौरवादिवत्संग्रामयन्ति । तथा केचिल्लोकेभ्योऽपरे लोभाद्धनाशावशात् दूरदेशानटन्तो दूरे जलधिमहारण्यं समुल्लंघ्य स्थिता ये देशा जनपदास्तान् अटन्तः परिभ्रमणं कुर्वन्तः । अनुपदं स्थाने स्थाने विपदं महापत्तिं लभन्ते प्राप्नुवन्ति । तथाभूते जगति करुणोत्पादाय वयं किं

कुर्मः किंनामकं समर्थोपायमाश्रयामः ? किं वदामः किंनामकं जगद्धितमुपदेशं दद्मः ? तन्न जानीमः । एतत्प्रत्यक्ष-दृश्यमानं विश्वं भुवनत्रयं । अरतिशतैः पीडोद्वेगदुःखानां शतशः समूहैः भृशमत्यर्थं व्याकुलं करुणास्पदविह्वलं वर्तते इत्यर्थः ॥ ३ ॥

( उपजातिवृत्तत्रयम् )

स्वयं खनन्तः स्वकरेण गर्तां मध्ये स्वयं तत्र तथा पतन्ति ।
तथा ततो निष्क्रमणं तु दूरेऽधोऽधःप्रपाताद्विरमन्ति नैव ॥ ४ ॥

व्याख्या— भो भव्या अयं विश्वजनः तथा तेन प्रकारेण । स्वकरेण निजहस्तेन आत्मनैवेति यावत् । गर्तां महा-खातिकां । स्वयं स्वकीयेनारंभप्रवृत्तिस्वभावेन नेश्वरादिप्रेरणया खनन्तोऽधोऽधस्तनतलप्रदेशं विदारयन्तः । यथा येन तल-प्राप्त्यभावेन । ततो गर्तामध्यभागात् निष्क्रमणं तु निर्गमस्तु दूरेऽस्तु परं तु अधोऽधःप्रपातादपि नैव विरमन्ति नीचै-र्नीचैर्गच्छन्तीव विरमन्ति नीचैर्गमनस्यापि अवसानं नैव प्राप्नुवन्ति सुतरामनन्तसंसारस्थं व्रजन्तीत्यर्थः ॥ ४ ॥

प्रकल्पयन्नास्तिकतादिवादमेवं प्रमादं परिशीलयन्तः ।
मग्ना निगोदादिषु दोषदग्धा दुरन्तदुःखानि हहा सहन्ते ॥ ५ ॥

व्याख्या—हहा महाकष्टं अज्ञाः सद्बोधविकला मिथ्यादृष्टयो व्याकरणतर्कसाहित्यादिनिर्लब्धवादशक्तयो यथार्थव-स्तुस्वरूपसारज्ञानवर्जिता वाचाटा इति यावत् । नास्तिकतादिवादं प्रकल्पयन् नास्तिकता पञ्च वा भूतचतुष्टयं विहा-

यान्यः कश्चिदात्माख्यः पदार्थो नास्तीत्येवं वदन्नास्तिकस्तद्भावस्तत्ता सादिर्यस्य स तथा आदिपदादात्मा कर्ता न भवति, भोगी तु भवति, सर्वज्ञो नास्ति, वेदवाक्यैर्धर्मनोदना मोक्षो न ज्ञानात्मकज्ञानं प्रकृतिधर्मः, सा तु जडात्मिकेत्यादयो बोध्याः इत्यादि वदनं वादस्तं प्रकल्पयन् स्वस्वेष्टशास्त्रादिरूपेण रचयन्। एवं प्रोक्तवादादिना प्रमादं मिथ्यात्वरागद्वेषादिप्रमत्ततां। परिशीलयन्तः समाचरन्तः दोषदग्धाः पूर्वोक्तदोषकृशानुना प्रज्वलितसद्विचारदेहाः। निगोदादिषु निगोदः साधारणशरीरवनस्पतिरादिना प्रत्येकवनपृथिव्यादिनरकादयो ग्राह्याः तेषु। दुरन्तदुःखानि दुःखेनान्तोऽवसानं येषां तानि दुरन्तानि दुःखानि जन्ममरणादिकष्टानि सहन्ते वेदयन्तीत्यर्थः ॥ ५ ॥

श्रृण्वन्ति ये नैव हितोपदेशं न धर्मलेशं मनसा स्पृशन्ति।
रुजः कथंकारमथापनेयास्तेषामुपायस्त्वयमेक एव ॥ ६ ॥

व्याख्या—येऽनिर्दिष्टनामधेयाः। हितोपदेशं धर्ममयहितशिक्षां। नैव श्रृण्वन्ति अयमेवात्मनः कल्याणप्राप्तेरुपायोऽस्तीति हितधिया नैवाकर्णयन्ति। तथा ये धर्मलेशं मनसा न स्पृशन्ति धर्मस्य दानादिचतुर्विधस्य लेशमेकादिभेदं देशतोऽपि मनसा धर्म एव सकलकल्याणदोऽस्तीति श्रद्धयापि न स्पृशन्ति न स्वीकुर्वन्ति। अथैवं स्थिते तेषां प्रोक्तस्वरूपाणां। रुजो जन्मजरामरणकर्मविकारादिरोगाः। कथंकारं केनौषधोपायालंबनेन कृत्वा। अपनेया निवार्याः? नान्येन केनापि निवार्याः सन्ति। कुत एवं? यतस्तेषां निवारणे उपायस्तु निवृत्तिसाधनं तु। एकोऽद्वितीयोऽयमेव अयमनन्तरनिर्दिष्टो हितश्रवणधर्मस्वीकार एव। स तु सुतरां परिहृत इत्यर्थः ॥ ६ ॥

उक्तोपदेशं प्रकृते नियोज्य फलितार्थं दर्शयति—

( अनुष्टुब्वृत्तम् )

परदुःखप्रतीकारमेवं ध्यायन्ति ये हृदि । लभन्ते निर्विकारं ते सुखमायतिसुन्दरम् ॥ ७ ॥

व्याख्या—ये कृतिनः । परदुःखप्रतीकारं परेषां दुःखानां निवारणं । हृदि स्वमनसि । एवं पूर्वोक्तप्रकारेण । ध्यायन्ति चिन्तयन्ति । ते सज्जनमूर्धन्याः । आयतिसुन्दरं आगामिनि काले कल्याणावहं । निर्विकारं अविनश्वरं । सुखं परमानन्दं । लभन्ते इत्यर्थः ॥ ७ ॥

अत्र गेयपद्याष्टकेन करुणाभावनां विभावयन्नाह—

सुजना भजत मुदा भगवन्तं सुजना भजत मुदा भगवन्तम् ।
शरणागतजनमिह निष्कारणकरुणावन्तमवन्तं रे, सुज० ॥ १ ॥

व्याख्या—हे सुजनाः सुतरां गुणसमृद्धा ये जनाः पुरुषास्ते सुजनास्तेषां संबोधनं हे सुपुरुषा यूयं । मुदा सानन्दया भक्त्या । भगवन्तं सर्वदर्शिनं जिनेश्वरं । भजत सेवध्वं सेवध्वं । किंविशिष्टं ? इह सर्वजीवराशौ । निष्कारणकरुणावन्तं निष्कारणं प्रत्युपकारजनकं पुत्रादिसंबन्धमनपेक्ष्यैव कृपास्वभावादेव पालयन्तं । तथा शरणागतजनं प्रपन्नशरणमुपदेशार्हभव्यजनसमूहं । अवन्तं सन्मार्गदर्शनेन दुर्गतिदुःखेभ्यो रक्षां कुर्वन्तं इत्यर्थः ॥ १ ॥

यान्यः कश्चिदारमाख्यः पदार्थो नास्तीत्येवं वदन्नास्तिकस्तद्भावस्तत्ता सादिर्यस्य स तथा आदिपदादात्मा कर्ता न भवति, भोगी तु भवति, सर्वज्ञो नास्ति, वेदवाक्यैर्धर्मनोदना मोक्षो न ज्ञानात्मकज्ञानं प्रकृतिधर्मः, सा तु जडात्मिकेत्यादयो वोध्याः इत्यादि वदनं वादस्तं प्रकल्पयन् स्वस्वेष्टशास्त्रादिरूपेण रचयन् । एवं प्रोक्तवादादिना प्रमादं मिथ्यात्वरागद्वेषादिप्रमत्ततां । परिशीलयन्तः समाचरन्तः दोषदग्धाः पूर्वोक्तदोषकृशानुना प्रज्वलितसद्विचारदेहाः । निगोदादिषु निगोदः साधारणशरीरवनस्पतिरादिना प्रत्येकवनपृथिव्यादिनरकादयो ग्राह्याः तेषु । दुरन्तदुःखानि दुःखेनान्तोऽवसानं येषां तानि दुरन्तानि दुःखानि जन्ममरणादिकष्टानि सहन्ते वेदयन्तीत्यर्थः ॥ ५ ॥

शृण्वन्ति ये नैव हितोपदेशं न धर्मलेशं मनसा स्पृशन्ति ।
रुजः कथंकारमथापनेयास्तेषामुपायस्त्वयमेक एव ॥ ६ ॥

व्याख्या—येऽनिर्दिष्टनामधेयाः । हितोपदेशं धर्ममयहितशिक्षां । नैव शृण्वन्ति अयमेवात्मनः कल्याणप्राप्तेरुपायोऽस्तीति हितधिया नैवाकर्णयन्ति । तथा ये धर्मलेशं मनसा न स्पृशन्ति धर्मस्य दानादिचतुर्विधस्य लेशमेकादिभेदं देशतोऽपि मनसा धर्म एव सकलकल्याणदोऽस्तीति श्रद्धयापि न स्पृशन्ति न स्वीकुर्वन्ति । अथैवं स्थिते तेषां प्रोक्तस्वरूपाणां । रुजो जन्मजरामरणकर्मविकारादिरोगाः । कथंकारं केनौषधोपायावलंबनेन कृत्वा । अपनेया निवार्याः ? नान्येन केनापि निवार्याः सन्ति । कुत एवं ? यतस्तेषां निवारणे उपायस्तु निवृत्तिसाधनं तु । एकोऽद्वितीयोऽयमेव अयमनन्तरनिर्दिष्टो हितश्रवणधर्मस्वीकार एव । स तु सुतरां परिहृत इत्यर्थः ॥ ६ ॥

रिपीतं सकृदेकदापि परि समस्तश्रवणसामग्र्या पीतं कर्णाञ्जलिभिः पानीकृतं । परमानन्दं मोक्षसुखोल्लासं प्रथयति विस्तारयति येन संसारान्निस्तरतीत्यर्थः ॥ ३ ॥

कुमततमोभरमीलितनयनं किमु पृच्छत पन्थानम् ।
दधिबुध्या नर जलमन्थन्यां किमु निदधत मन्थानं रे, सु० ॥ ४ ॥

व्याख्या—भो भव्याः कुमततमोभरमीलितनयनं कुत्सितं मिथ्यात्वाज्ञानहिंसादिभिर्दूषितत्वादसारभूतं मतमभिप्रेतदर्शनं शास्त्रज्ञानं च यत्कुमतं तदेव तद्रूपं वा यत्तमोभरोऽन्धकारराशिस्तेन मीलिते पटलद्वयसंपुटीकृते वर्तेते नयने नेत्रे यस्य गुरोः स तथाभूतस्तं । पन्थानं मोक्षमार्गं । किमु पृच्छत किमु कया विचारणया संभावनया वा पृच्छत अस्यादर्शनस्य मुखान्मोक्षमार्गं ज्ञातुमिच्छत । हे नर हे विद्वज्जन । जलमन्थन्यां जलभृतायां मन्थन्यां मथनिकायां विशालमुखोदरायां मृद्भाजन्यां गोलीती लोके । किमु वितर्के वितर्कयत यूयं किं दधिबुध्या एतद्दधीति धिया विलोडनाय मन्थानं मुन्दं रवैयमिति लोके निदधत निक्षिपत इत्यर्थः ॥ ४ ॥

अनिरुद्धं मन एव जनानां जनयति विविधातंकम् ।
सपदि सुखानि तदेव विधत्ते आत्मारामममशंकं रे, सु० ॥ ५ ॥

व्याख्या—हे चेतन स्वमाश्रयप्रवृत्तं मानसं रोधय । किमर्थमित्याह— यतो जनानां प्राणिनां । अनिरुद्धं पञ्चविष-

क्षणमुपधाय मनः स्थिरतायां पिबत जिनागमसारम् ।
कापथघटनाविकृतविचारं त्यजत कृतान्तमसारं रे, सु० ॥ २ ॥

व्याख्या—मनश्चित्तं । क्षणं स्वल्पकालमपि । स्थिरतायां निश्चलैकाग्रताभावे उपधाय निवेश्य संस्थाप्येति यावत् । जिनागमसारं जिनसिद्धान्तानां सारं परमार्थज्ञानामृतं पिबत समास्वादनं कुरुत । कापथघटना तथा कापथा मोक्षमार्गे विघ्नकारिणः कुमार्गाः तेषां घटना युक्तयो रचना इति यावत् ताभिः विकृतविचारं विकृताः सर्वथा नित्यस्यानित्यस्वादिभिर्विपरीता विचारा वस्तुपर्यालोचनप्रकारा यत्र स तथा तं । असारं परमार्थवर्जितं । कृतान्तं मोकरूपं शास्त्रं तत् त्यजत परिहरतेत्यर्थः ॥ २ ॥

परिहरणीयो गुरुरविवेकी भ्रमयति यो मतिमन्दम् ।
सुगुरुवचः सकृदपि परिपीतं प्रथयति परमानन्दं रे, सु० ॥ ३ ॥

व्याख्या—यो विपरीतधर्मोपदेष्टा अविवेकी स्वपरहिताहितसत्यासत्यादीनामविशेषज्ञो गुरुः प्रव्रजितोऽप्रव्रजितो वा शास्त्रवक्ता परिहरणीयः परिवर्जनीयः तन्मुखाद्धर्मशास्त्रं न श्रोतव्यं । कुतो ;यतो हेतोः । यो वक्ता मतिमन्दं मत्या बुध्या मन्दोऽशीघ्रग्राही परमार्थवेदनेऽनिपुणस्तं भ्रमयति वस्तुस्वरूपान्यथाप्रतिपादनेनाधर्मेऽपि धर्मधीसंपादनाद्भ्रान्तिं जनयति । ततः स च भ्रान्तश्च क्वापि भवावर्ते भ्रमतः, तस्मात्परिहरणीयः सुगुरुवचः सद्गुरोरुपदेशस्तु । सकृदपि प-

रपीतं सकृदेकदापि परि समस्तश्रवणसामग्र्या पीतं कर्णाञ्जलिभिः पानीकृतं । परमानन्दं मोक्षसुखोल्लासं प्रथयति विस्ता
रयति येन संसारान्निस्तरतीत्यर्थः ॥ ३ ॥

कुमततमोभरमीलितनयनं किमु पृच्छत पन्थानम् ।
दधिबुध्या नर जलमन्थन्यां किमु निदधत मन्थानं रे, सु० ॥ ४ ॥

व्याख्या—भो भव्याः कुमततमोभरमीलितनयनं कुत्सितं मिथ्यात्वाज्ञानहिंसादिभिर्दूषितत्वादसारभूतं मतमभिप्रेत-
दर्शनं शास्त्रज्ञानं च यत्तत्कुमतं तदेव तद्रूपं वा यत्तमोभरोऽन्धकारराशिस्तेन मीलिते पटलद्वयसंपुटीकृते वर्तेते नयने
नेत्रे यस्य गुरोः स तथाभूतस्तं । पन्थानं मोक्षमार्गं । किमु पृच्छत किमु कया विचारणया संभावनया वा पृच्छत अस्या-
दर्शनस्य मुखान्मोक्षमार्गं ज्ञातुमिच्छत । हे नर हे विद्वज्जन । जलमन्थन्यां जलभृतायां मन्थन्यां मथनिकायां विशाल-
मुखोदरायां बृहत्कुम्भ्यां गोलीती लोके । किमु वितर्कं वितर्कयत यूयं किं दधिबुध्या एतद्दधीति धिया विलोडनाय म-
न्थानं गुन्दं रवैयमिति लोके निदधत निक्षिपत इत्यर्थः ॥ ४ ॥

अनिरुद्धं मन एव जनानां जनयति विविधातंकम् ।
सपदि सुखानि तदेव विधत्ते आत्मारामसशंकं रे, सु० ॥ ५ ॥

व्याख्या—हे चेतन रमाश्रवप्रभृतं मानसं रोधय । किमर्थमित्याह— यतो जनानां प्राणिनां । अनिरुद्धं पञ्चविषय-

प्रवृत्तेरनिषिद्धं । मनश्चित्तमेव न त्वन्यत् । विविधातंकं विविधमनेकभेदभिन्नं आतंकं रोगसंतापसंदेहभयादिकं जनयत्युत्पादयति । तदेव मन एव यदि आत्मारामं चेतनस्वरूपमेवारामं रमणवाटिकां भजेत्तदा अशंकं सन्देहरहितं यथा स्यात्तथा । सपदि भवनसमकालमेव । सुखानि सर्वशर्माणि विधत्ते कुर्यादित्यर्थः ॥ ५ ॥

परिहरताश्रवविकथागौरवमदनमनादिवयस्यम्। क्रियतां सांवरसाप्तपदीनं ध्रुवमिदमेव रहस्यं रे, सु०॥६॥

व्याख्या—भो भव्याः अनादिवयस्यं अनादिमित्रं सहचारि । आश्रवविकथागौरवं आश्रवाः प्रोक्तरूपाः, विकथा देशकथादिकोक्तरूपाः, गौरवम् समृद्ध्यादिबहुमानरूपं, मदनः कामः, समाहारद्वन्द्वे कृते । तत् परिहरत वर्जयत । तथा सांवरसाप्तपदीनं संवरो मनइन्द्रियकषाययोगानां निरोधस्तस्येदं सांवरं एव साप्तपदीनं मित्रं क्रियतां विधीयतां । ध्रुवं निश्चितं । इदं प्रोक्तरूपमेव रहस्यं । धर्मस्य जन्मनः शास्त्रस्य च सारमित्यर्थः ॥ ६ ॥

सहत इह किं भवकान्तारे गदनिकुरंबमपारम्। अनुसरताहितजगदुपकारं जिनपतिमगदंकारं रे, सु०७

व्याख्या—भो भव्या यूयं इह दृश्यमानेऽनेकदुःखपूर्णे भवकान्तारे संसाररूपमहारण्ये । अपारमनन्तं । गदनिकुरंबं रोगसमूहः । किमिति कथं । सहते तत्पीडां सहमाना दुःखिनः किं तिष्ठथ । आहितजगदुपकारं आहितः संपादितः जगतो भुवनस्योपकारः द्रव्यभावरोगहरणरूपः येन स तं । जिनपतिं जिनेश्वरं । अगदंकारं आरोग्यकारिणं । अनुसरत समाश्रयध्वमित्यर्थः ॥ ७ ॥

उपसंहारमाह—

शृणुतैकं विनयोदितवचनं नियतायतिहितरचनम् ।

रचयत सुकृतसुखशतसन्धानं शान्तसुधारसपानं रे, सु० ॥ ८ ॥

॥ इति श्रीशान्तसुधारसगेयकाव्ये कारुण्यभावनाविभावनो नाम पञ्चदशः प्रकाशः ॥

व्याख्या—भो भव्या नियतायतिहितरचनं नियतं निश्चितं अवश्यंभावेनेति यावत् आयत्यामागामिनि काले फलप्रापणे हितरचनं हितमात्मनः कल्याणं तस्य रचना निष्पादनं यस्मिंस्तत्तथाभूतं । एकमद्वितीयं । विनयोदितं विनयेन निभृतवादिनाऽचलवचनवक्त्राऽर्हता उदितं प्रोक्तं यद्वचनं उपदेशस्तत् शृणुत । सुकृतसुखशतसन्धानं सुकृतानि पुण्यानि सदाचरणानि च सुखानि नरामरमोक्षशर्माणि तेषां शतानि सुप्रभूततरसंख्याभिः संख्येयानि तेषां यत्सन्धानं आत्मनि संयोजनं तत्तथाभूतगुणं । शान्तसुधारसपानं शान्तो रागाद्यभावभवविरक्तिमोक्षाभिलाषादिमान् जीवस्वभावः स एवाजरामरकारिसुधारसस्तस्य पानं प्रेमभरेणास्वादनं तत् रचयत कुरुतेत्यर्थः ॥ ८ ॥

इति श्रीतपागच्छीयसंविग्नशाखीयपरममुनिश्रीबुद्धिविजयमुख्यशिष्यश्रीमुक्तिविजयसतीर्थ्यतिलकमुनिश्रीवृद्धिविजयचरणयुगसेविना पंडितगंभीरविजयगणिना विरचितायां श्रीशान्तसुधारसटीकायां करुणाभावनाविभावनो नाम पञ्चदशः प्रकाशः ॥

## ॥ अथ षोडशः प्रकाशः ॥

व्याख्यातः पञ्चदशः प्रकाशः। अथ षोडशो व्याख्यायते। तस्य चायमभिसंबन्धः—पञ्चदशे करुणाभावना भाविता, तां च भावयन् सर्वेषु करुणायुक्तत्वेन सदृशपरिणामी भवति। यः सर्वत्र समपरिणामी रागादिपक्षपातविरहितत्वाद्यथार्थतत्त्वग्राहित्वाच्च स मध्यस्थो भवतीत्यतः षोडशे माध्यस्थ्यभावनां विभावयन्नाह। तस्याश्चायमादिमः श्लोकः—

( पञ्चापि शालिनीवृत्तानि )

श्रान्ता यस्मिन् विश्रमं संश्रयन्ते रुग्णाः प्रीतिं यत्समासाद्य सद्यः।
लभ्यं रागद्वेषविद्वेषिरोधादौदासीन्यं सर्वदा तत्प्रियं नः ॥ १ ॥

व्याख्या—भो भव्या यूयं तन्माध्यस्थ्यप्रीता भवत। किं तदित्याह—यस्मिन् माध्यस्थ्ये प्राप्ते सति अस्मिन् जगति श्रान्ताः रागद्वेषमोहादिजन्यसंतापज्वरैः परिक्षीणा अपि जना विश्रमं पूर्वोक्तसंतापज्वरविरमणेन खेदाभावं संश्रयन्तेऽतिशयेन प्राप्नुवन्ति। तथा रुग्णाः रोगैः समन्वितत्वेन रुक्प्रपीडितास्तेऽपि यस्मिन् प्रीतिं देहरागरोगद्वेषशमनात्प्रेमरसमास्वादयन्ति। भुग्नोऽपि रुग्णवद्व्याख्येयो रुग्णस्य द्व्यर्थत्वात्। तथा यन्माध्यस्थ्यं रागद्वेषविद्वेषिरोधात् रागद्वेषौ प्रसिद्धौ तावेव विद्वेषिणौ हितविनाशकशत्रू तयो रोधोऽनुभवो निराकरणं च तस्माज्जीवाः। समासाद्य प्राप्य। सद्यः शीघ्रं। औ-

दासीन्यं रागद्वेषपक्षपातविरहभावं । भजन्ते समास्वादयन्ति । तन्माध्यस्थ्य नोऽस्माकं सर्वदा निरन्तरं सर्वकालं प्रियमिष्टं भवत्वित्यर्थः ॥ १ ॥

मध्यस्थानां खेदकारणमेव नास्तीत्याह—

लोके लोका भिन्नभिन्नस्वरूपा भिन्नैर्भिन्नैः कर्मभिर्मर्मभिद्भिः ।
रम्यारम्यैश्चेष्टितैः कस्य कस्य तद्विद्भिः स्तूयते रुष्यते वा ॥ २ ॥

व्याख्या—विद्वांसो मध्यस्थाः स्वहृदये वक्ष्यमाणप्रकारं भावयन्ति । किमित्याह— लोके भुवनत्रये लोकाः प्राणिनः मर्मभिद्भिः भिन्नैर्भिन्नैः कर्मभिः मर्मभिद्भिः मर्माणि जीवस्थानानि संधिमिलापहितप्राण्यादिस्थानानि तानि भिन्दन्ति विदारयन्ति विनाशयन्तीति यावत् यानि तानि तथा तैर्मर्मभिद्भिः । भिन्नैर्भिन्नैः कर्कशकर्कशतरकर्कशतमभेदप्राप्तैः । कर्मभिर्ज्ञानावरणीयादिभिः शुभाशुभैः कृताः भिन्नभिन्नस्वरूपा भिन्नं भिन्नं विरूपविरूपतरविरूपतमत्वेन सुरूपसुरूपतरसुरूपतमत्वेन क्रूरशान्तदुःखिसुखिसधननिर्धनदुर्मतिसुमत्यादित्वेनान्यत्वमन्यत्वं प्राप्तं स्वरूपं आकारस्वभावः येषां ते तथाविधाः सन्तीत्यतः रम्यारम्यैश्चेष्टितैः रम्याणि सुन्दराणि दानादिरूपाणि अरम्याण्यसुन्दराणि वधादिरूपाणि यानि चेष्टितानि क्रियाप्रवृत्तयस्तैर्विद्भिस्तत्त्वविद्भिर्मध्यस्थैः कस्य कस्य रम्यक्रियाकारिणः स्तूयते प्रशस्यते । वाऽथवा कस्य क-

स्यारम्यकर्तव्यविधायिनो रुष्यते कोपनिन्दादि क्रियते स्वेष्टसाधनव्याघातहेतुभूते द्वे ज्ञात्वा न कस्यापि स्तुतिर्वा निन्दा वा कार्या विद्भिरित्यर्थः ॥ २ ॥

अथोदाहरणेन माध्यस्थ्यं द्रढयन्नाह—

मिथ्या शंसन्वीरतीर्थेश्वरेण रोद्धुं शेके न स्वशिष्यो जमालिः ।
अन्यः को वा रोत्स्यते केन पापात्तस्मादौदासीन्यमेवात्मनीनम् ॥ ३ ॥

व्याख्या—भो भव्याः स्वश्रेयोऽर्थिभिर्भवद्भिर्मध्यस्थैरेव स्थेयं । यतो भगवता स्वशिष्यः स्वहस्तदीक्षितः । जमालिः कुलिनोऽपि मिथ्यात्वोदयेन मिथ्या शंसन् स्वस्य भवनिपातकारणमसत्यं प्ररूपयन् । वीरतीर्थेश्वरेण श्रीवर्धमानतीर्थपतिना सर्वबोधनप्रकारेणापि रोद्धुं निवारयितुं न शेके न शक्यते स्म, अनिवर्त्यकदाग्रहग्रासं ज्ञात्वोपेक्षितः, तर्हीतरेषामनिवर्त्यकदाग्रहनिषेधे का शक्तिः ? न कापि । अतो माध्यस्थ्ये स्थेयं । तस्मादुक्तहेतोः । अन्यः सामान्यज्ञाता । कः कस्कः । वाऽथवा केन साधनविशेषेण । पापात्कदाग्रहाघराशेः । रोत्स्यते निषेत्स्यते । तत औदासीन्यमेव शोकरूपमाध्यस्थ्यमेव । आत्मनीनं आत्मसर्वहितकरं आत्मबुध्या समाचरणीयमित्यर्थः ॥ ३ ॥

अर्हन्तोऽपि प्राज्यशक्तिस्पृशः किं धर्मोद्योगं कारयेयुः प्रसह्य ।
दद्युः शुद्धं किन्तु धर्मोपदेशं यत्कुर्वाणा दुस्तरं निस्तरन्ति ॥ ४ ॥

व्याख्या—भाज्यशक्तिस्पृशः महाशक्तिसमन्विताः। अर्हन्तो जगत्रयविजयकरणसमर्था जिनेश्वरा अपि। किं प्रसह्य किं फ प्रसह्य बलादेशादिसामर्थ्यात्। कस्यचिद्धर्मोद्योगं धर्मोद्यमं कारयेयुः अप्रवर्तमानं प्रवर्तयेरन्न प्रवर्तयेयुर्जनानिति शेषः। किं तु किं तर्हि कुर्युरित्याह—शुद्धं यथार्थस्वरूपं यथायोग्यं यथाहितप्रापकं निर्दोषं भवति तथारूपं उपदेशं विधिनिषेधोभयात्मकं धर्ममार्गकथनं दद्युः जिनेश्वराः कुर्युः। यत्कुर्वाणाः यदर्हदुपदिष्टं कुर्वाणा विदधाना भव्यजना दुस्तरं दुःखेन तरणीयं भवसागरं निस्तरन्ति नितरां सुखेन पारं गच्छन्तीत्यर्थः॥ ४॥

तस्मादौदासीन्यपीयूषसारं वारं वारं हन्त सन्तो लिहन्तु।
आनन्दानामुत्तरङ्गत्तरङ्गैर्जीवद्भिर्यद्भुज्यते मुक्तिसौख्यम्॥ ५॥

व्याख्या—हन्तेत्यामंत्रणे हे सन्तो भो भोः सुहृसज्जनाः। तस्मादुक्तहेतुतः। औदासीन्यपीयूषसारं औदासीन्यं मोक्षस्वरूपं माध्यस्थ्यं तदेव पीयूषमजरामरारोग्यविधायिनी सुधा तस्य यत्सारं तत्त्वपरीक्षणे ग्रहणादरे चातिवर्य दार्ढ्यं स्थैर्यं चेति यावत् तत्। वारं वारं भूयो भूयो लिहन्तु समास्वादन्तां। कुत एवमुपदिशतीत्याह— यद्यस्मादौदासीन्यसारसमास्वादनाज्जीवाः जीवद्भिरायुरादिप्राणान् धारयद्भिर्वर्तमानभवेऽप्यास्तां मोक्षप्राप्तावित्यपेरर्थः। आनन्दानामाह्लादविशेषाणां। उत्तरंगत्तरंगैः उदधिकाधिकोपर्युपरिसमुच्छलद्भिः तरंगैः सुखोल्लासलहरीभिः। मुक्तिसौख्यं मोक्षसुखस्वभावं। भुज्यते समास्वाद्यते प्राप्यते तर्हि तेन माध्यस्थ्यमेव सेवनीयमित्यर्थः॥ ५॥

अथ गेयपद्याष्टकेन माध्यस्थ्यभावनां विभावयन्नाह—

अनुभव विनय सदा सुखमनुभव औदासीन्यमुदारं रे।
कुशलसमागममागमसारं कामितफलमन्दारं रे, अनु० ॥ १ ॥

व्याख्या—हे विनय हे गुणानुयायिचेतन। उदारमितरसर्वसुखेभ्यः प्रधानं। औदासीन्यं सुखं सदाऽनुभव उदासीने मध्यस्थस्वभावे भवं संपन्नं यत्तदौदासीन्यं सुखमानन्दस्वभावं त्वं सदा निरन्तरं सर्वकालमनुभव स्वरूपेण प्रीतिरसोत्पादनेन च वेदय। कीदृक् तदित्याह— कुशलसमागमं कुशलः सर्वाकल्याणवर्जितो मोक्षस्तस्य समागमः संगतिः रागद्वेषपक्षाभावान्मुक्तारमतुल्यस्वभावत्वात् यस्मिन् स तं। आगमसारं आगमस्याध्ययनश्रवणमननरूपस्य सारं निष्पक्षपातेन तत्त्वस्य परीक्षणग्रहणादरस्वभावत्वान्मक्षणतुल्यं। कामितफलमन्दारं स्वाभीष्टकार्यसिद्धेर्मन्दारं कल्पवृक्षभूतं समुद्दिष्टकार्यं तेषामवश्यमेव निष्पद्यतेऽतो माध्यस्थ्यं भजेत्यर्थः ॥ १ ॥

परिहर परचिन्तापरिवारं चिन्तय निजमविकारं रे।
वदति कोऽपि चिनोति करीरं चिनुतेऽन्यः सहकारं रे, अनु० ॥ २ ॥

व्याख्या—हे आत्मन् त्वं परचिन्तापरिवारं परेषामात्मनो भिन्नशरीरधनस्वजनादीनां चिन्तापरिवारं रक्षणार्जनपालनादिकृते समुद्भवद्विकल्पजालं। परिहर वर्जय मा कुरु। अविकारं समुद्भवविगमादिविकाररहितं। निजमविनश्वरमा-

रस्वरूपं । चिन्तय ध्यायस्व । कोऽपि कश्चिदज्ञो वदति ममास्मिन् पक्षपातो नास्ति यथास्थितमेव मयोक्तं इति जल्पति, न तु पक्षपातं मुञ्चति, स करीरं चिनोति दुःखकंटकाकीर्णमविश्रामपदं पापराशिकरीरतरुं चिनोति समुपार्जयति । अन्योऽमायावी मध्यस्थोऽपक्षपातित्वेन । सहकारं सुखसंपादकसच्छायमधुरफलिनं पुण्यमाकन्दं चिनुते समुत्पादयन् वर्ततेऽतो यद्रोचते तत्कुर्वित्यर्थः ॥ २ ॥

योऽपि न सहते हितमुपदेशं तदुपरि मा कुरु कोपं रे ।
निष्फलया किं परजनतप्त्या कुरुषे निजसुखलोपं रे, अनु० ॥ ३ ॥

व्याख्या—हे आत्मन् त्वं योऽपि कश्चित्कदाग्रही हितोपदेशं यथार्थवस्तुस्वरूपमयजिनाद्यवहितधर्मोपदेशं न सहते सत्यत्वेन न श्रद्धात्यपि, तदनुष्ठानं तु दूरेऽस्तु, सत्येन रोचयत्यपि न । तदुपरि कोपं मा कुरु तस्योपरि रुष्टो मा भव । कुतोऽयं निषेधः ? यतो निष्फलया स्वपरोपकारसिद्धिरहितया परजनतप्त्या अन्यजनानां चिन्तया संतापेन च । निजसुखलोपं स्वात्मनः सुखविनाशं । किं निरर्थकं कुरुषे विदधासीत्यर्थः ॥ ३ ॥

सूत्रमपास्य जडा भाषन्ते केचन मतमुत्सूत्रं रे ।
किं कुर्मस्ते परिहृतपयसो यदि पीयन्ते ( पिबन्ति ) मूत्रं रे, अनु० ॥ ४ ॥

व्याख्या—केचन कियन्तो जडा मूर्खशिरोमणयः । सूत्रं सुशास्त्राधारं । अपास्य परिहृत्य । भाषन्ते स्वेच्छयैव यद्वा

अथ गेयपद्याष्टकेन माध्यस्थ्यभावनां विभावयन्नाह—

अनुभव विनय सदा सुखमनुभव औदासीन्यमुदारं रे ।
कुशलसमागममागमसारं कामितफलमन्दारं रे, अनु० ॥ १ ॥

व्याख्या—हे विनय हे गुणानुयायिचेतन । उदारमितरसर्वसुखेभ्यः प्रधानं । औदासीन्यं सुखं सदाऽनुभव उदासीने मध्यस्थस्वभावे भवं संपन्नं यत्तदौदासीन्यं सुखमानन्दस्वभावं त्वं सदा निरन्तरं सर्वकालमनुभव स्वरूपेण प्रीतिरसोत्पादनेन च वेदय । कीदृक् तदित्याह— कुशलसमागमं कुशलः सर्वाकल्याणवर्जितो मोक्षस्तस्य समागमः संगतिः रागद्वेषपक्षाभावान्मुक्तात्मतुल्यस्वभावत्वात् यस्मिन् स तं । आगमसारं आगमस्याध्ययनश्रवणमननरूपस्य सारं निष्पक्षपातेन तत्त्वस्य परीक्षणग्रहणादरस्वभावत्वान्मक्षणतुल्यं । कामितफलमन्दारं स्वाभीष्टकार्यसिद्धेर्मन्दारं कल्पवृक्षभूतं समुद्दिष्टकार्यं तेषामवश्यमेव निष्पद्यतेऽतो माध्यस्थ्यं भजेत्यर्थः ॥ १ ॥

परिहर परचिन्तापरिवारं चिन्तय निजमविकारं रे ।
वदति कोऽपि चिनोति करीरं चिनुतेऽन्यः सहकारं रे, अनु० ॥ २ ॥

व्याख्या—हे आत्मन् त्वं परचिन्तापरिवारं परेषामात्मनो भिन्नशरीरधनस्वजनादीनां चिन्तापरिवारं रक्षणार्जनपालनादिकृते समुद्भवद्विकल्पजालं । परिहर वर्जय मा कुरु । अविकारं समुद्भवविगमादिविकाररहितं । निजमविनश्वरमा-

व्याख्या—हे चेतन त्वं मायाजालं जीवमत्स्यबन्धनविधायिनी माया छलवृत्तिरूपकपटचिन्तनज्ञापनसमाचरणं सैव जालं जन्तुग्राहकपाशः तत् संवृणु संक्षिप्तं कुरु निरोधयेति यावत् । हृदयंगमसमतां हृदयंगमा मनोहरा युक्तियुक्तेति यावत् तादृशी या समता सर्वत्र तुल्यपरिणामिता तां हृदा हृत्कजेन सह रमय क्रीडय । पुद्गलपरवशतां पुद्गलाः रागद्वेषमनोवाक्कायादयस्त एवात्मनो विजातीयत्वेन परेऽन्ये तेषां या वशता नियंत्रणा तदधीनवर्तना तां । वृथा वहसि स्वार्थं विनैव प्राप्नोषि । कुत एवं ? यतस्तवायुर्जीवितं । परिमितकालं पञ्चाशत्षष्टिवर्षं यावन्मितकालं विद्यते परवशेन स्वार्थं संपादयितुं न शक्नोषीत्यर्थः ॥ ६ ॥

अनुपमतीर्थमिदं सर चेतनमन्तःस्थिरमभिरामं रे ।
चिरं जीव विशदपरिणामं लभसे सुखमविरामं रे, अनु० ॥ ७ ॥

व्याख्या—हे चेतन हे प्राणिन् त्वं । इदमौदासीन्यं । अभिराममतिशयेन रमणीयं । अनुपममन्यैरुपमातुमशक्यं । अन्तःस्थितं स्वासन्नतरमात्मनि प्रतिष्ठितं । तीर्थं भवसिन्धोर्निरपायनिगमनतटं । विशदपरिणामं शुद्धनिर्मलस्वहितफलदं । सर ध्यायस्व । तेन ध्यानेन त्वं हे जीव हे आत्मन् चिरं चिरकालपर्यन्तं अविरामं निरन्तरं निरवसानं सुखमानन्दं लभसे प्राप्नोषीत्यर्थः ॥ ७ ॥

परब्रह्मपरिणामनिदानं स्फुटकेवलविज्ञानं रे ।
विरचय विनयविवेचितज्ञानं शान्तसुधारसपानं रे, अनु० ॥ ८ ॥

तथा जल्पन्ति । तथा केचन उत्सूत्रं शास्त्रविरुद्धमिदमिति जानन्तोऽपि मतं स्वाभिप्रेतमेव प्ररूपयन्ति । तत्र वयं किं कुर्मः ? यत्तेऽज्ञाः परिहृतपयसः परिहृतं त्यक्तं पयो मधुरदुग्धं यैस्ते तथा भूत्वा यदि मूत्रं प्रस्रवणं स्वरुच्या पीयन्ते तर्हि पिबन्तु, का नो हानिरित्यर्थः ॥ ४ ॥

पश्यसि किं न मनःपरिणामं निजनिजगत्यनुसारं रे ।
येन जनेन यथा भवितव्यं तद्भवता दुर्वारं रे, अनु० ॥ ५ ॥

व्याख्या—हे चेतन त्वं निजनिजगत्यनुसारं भाविनी या स्वकीया स्वकीया गतिर्जन्मान्तरप्राप्तिः तस्या अनुसारं सदृशं वर्तमानं । जनानां मनःपरिणामं हृदयाकूतं । किं न पश्यसि केन कारणेन न विलोकयसि ? स्वचेतसा तद्विलोक्य माध्यस्थ्यं भज । कोऽत्र परमार्थ इत्याह—येन हेतुना येन जनेन यथा भवितव्यं येन केनचिदनिर्दिष्टनामधेयेन जनेनावश्यं विपाकेन वेदितव्यनिकाचितकर्मवता प्राणिना यथा येन सुखित्वदुःखित्वसुरनरनैरयिकत्वादिना च प्रकारेण भवितव्यं नियमेन भविष्यत्येव तस्य तथा भवनं । तन्नियतभाविभवनं भवता स्वयोपायोद्यमपिना दुर्वारं दुष्करनिवार्यमिति माध्यस्थ्यमेव भजनीयमित्यर्थः ॥ ५ ॥

रमय हृदा हृदयंगमसमतां संवृणु मायाजालं रे ।
वृथा वहसि पुद्गलपरवशतामायुः परिमितकालं रे, अनु० ॥ ६ ॥

## । अथ प्रशस्तिः ।

( स्रग्धरावृत्तद्वयम् )

एवं सद्भावनाभिः सुरभितहृदयाः संशयातीतगीतो-
न्नीतस्फीतात्मतत्त्वास्त्वरितमपसरन्मोहनिद्राममत्वाः ।
गत्वा सत्त्वाममत्वातिशयमनुपमां चक्रिशक्राधिकानां
सौख्यानां मंक्षु लक्ष्मीं परिचितविनयाः स्फारकीर्तिं श्रयन्ते ॥ १ ॥

व्याख्या—एवं षोडशभिः प्रकाशैः प्रोक्तप्रकारेण । सद्भावनाभिः सत्यः समीचीनाः समुज्ज्वलपरिणामोत्पादनप्रवणाः भावना वस्तुतत्त्वपर्यालोचनात्मका आत्मनश्चिन्तनाध्यवसायास्ताभिः । सुरभितहृदयाः सुरभितान्यधिवासितानि हृदयानि मनांसि येषां ते तथाविधाः सन्तः । संशयातीतगीतोन्नीतस्फीतात्मतत्त्वाः संशया नानाजातीयसंदेहास्तैरतीतं सुनिश्चितकृतत्वाद्रहितं गीतं समुत्कीर्तितं उन्नीतं ज्ञानिभिर्यादृशं महत्त्वं प्रोक्तं तादृशं स्फीतं गुणसमृद्धं व्याप्तमात्मतत्त्वं येषां ते तथाविधाः सन्तः । त्वरितं शीघ्रं । अपसरन्मोहनिद्राममत्वाः अपसरन्ती सुदूरमपुनर्भावितया सत्तातो विनश्यन्ती मोहनिद्राममत्वे मोहोऽज्ञानादिरूपस्तदात्मिका निद्रा सुषुप्त्यादिरूपा ममत्वं पौद्गलिकचेतनरूपस्वभिन्नदेहगेहवनितापुत्रादिपदार्थेषु मदीयत्वबुद्धिर्येषां ते तथाविधाः । सत्त्वाः भावनाभावितमतिप्राणिनः । अममत्वातिशयं गत्वा

॥ इति श्रीशान्तसुधारसगेयकाव्ये माध्यस्थ्यभावनाविभावनो नाम षोडशः प्रकाशः ॥

व्याख्या—हे विनय हे विनीतात्मन् पूर्वोक्तमौदासीन्यं परब्रह्मपरिणामनिदानं परं प्रकृष्टं ब्रह्म निर्विकारं निरञ्जनं शुद्धचैतन्यं तद्रूपः यः परिणामश्चेतनस्य तेन रूपेण परिणमनभवनं तस्य निदानं परमसाधनं वर्तते । तथेदमेव स्फुटं स्पष्टं केवलं रागादिपरिणतिमिश्रतारहितं विज्ञानं विशिष्टज्ञानमेव वर्तते तथेदमेव विवेचितज्ञानं विवेचितं यथार्थायथार्थशुद्धाशुद्धादितया निर्धार्य पृथक्कृतं येन ज्ञानं शास्त्ररचितरूपं जनहृदि परिणतं भावितरूपं च तथाभूतं वर्तते । तथेदमेव षोडशप्रकाशैर्दर्शितज्ञानपरिणतिरूपं शान्तसुधारसपानं भवति तद्भिरच्य निरन्तरं विधेहीत्यर्थः ॥ ८ ॥

॥ इति श्रीतपागच्छीयसंविग्नशाखीयपरममुनिश्रीवृद्धिविजयमुख्यशिष्यश्रीमुक्तिविजयगणिसतीर्थ्यतिलकमुनिश्रीवृद्धिविजयचरणयुगसेविना पंडितगंभीरविजयगणिना विरचितायां श्रीशान्तसुधारसटीकायां माध्यस्थ्यभावनाविभावनो नाम षोडशः प्रकाशः समजनि ॥

## । अथ प्रशस्तिः ।

( स्रग्धरावृत्तद्वयम् )

एवं सद्भावनाभिः सुरभितहृदयाः संशयातीतगीतो-
न्नीतस्फीतात्मतत्त्वास्त्वरितमपसरन्मोहनिद्राममत्वाः ।
गत्वा सत्त्वाममत्वातिशयमनुपमां चक्रिशक्राधिकानां
सौख्यानां मंक्षु लक्ष्मीं परिचितविनयाः स्फारकीर्तिं श्रयन्ते ॥ १ ॥

व्याख्या—एवं षोडशभिः प्रकारैः प्रोक्तप्रकारेण । सद्भावनाभिः सत्यः समीचीनाः समुज्ज्वलपरिणामोत्पादनप्रवणाः भावना वस्तुतत्त्वपर्यालोचनात्मका आत्मनश्चिन्तनाध्यवसायास्ताभिः । सुरभितहृदयाः सुरभितान्यधिवासितानि हृदयानि मनांसि येषां ते तथाविधाः सन्तः । संशयातीतगीतोन्नीतस्फीतात्मतत्त्वाः संशया नानाजातीयसंदेहास्तैरतीतं सुनिश्चितकृतत्वाद्रहितं गीतं समुत्कीर्तितं उन्नीतं ज्ञानिनिर्याहृशं महत्त्वं प्रोक्तं तादृशं स्फीतं गुणसमृद्धं व्याप्तमात्मतत्त्वं येषां ते तथाविधाः सन्तः । त्वरितं शीघ्रं । अपसरन्मोहनिद्राममत्वाः अपसरन्ती सुदूरमपुनर्भावितया सत्तातो विनश्यन्ती मोहनिद्राममत्वे मोहोऽज्ञानादिरूपस्तदात्मिका निद्रा सुषुप्त्यादिरूपा ममत्वं पौद्गलिकचेतनरूपस्वभिन्नदेहगेहवनितापुत्रादिपदार्थेषु मदीयत्वबुद्धिर्येषां ते तथाविधाः । सत्त्वाः भावनाभावितमतिप्राणिनः । अममत्वातिशयं गत्वा

निर्ममत्वस्वभावप्रकर्षाधिक्यं प्राप्य । परिचितविनयाः प्रचुरतरसमर्जितविनीतभावाः । चक्रिशक्राधिकानां चक्रिणः षट्खण्डभरतक्षेत्राधिपतयः, शक्राः सौधर्मेन्द्रादयो देवेश्वराः, अधिका अहमिन्द्रा ग्रैवेयकानुत्तरसुरास्तेषां । सौख्यानां सुखान्यानन्दविशेषास्तेषां भावा उपभोगतया आसयस्तद्रूपाणां । अनुपमां उपमातुमशक्यामनन्यसदृशीमिति यावत् तां । लक्ष्मीमानन्दसंपदं । मंक्षु सत्वरं श्रयन्ते प्राप्नुवन्ति । तथा स्फारकीर्तिं स्फारामतिशयत उदारां विशालामिति यावत् । कीर्तिं सुयशोराशिं श्रयन्त इत्यर्थः ॥ १ ॥

दुर्ध्यानप्रेतपीडा प्रभवति न मनाक्काचिदद्वन्द्वसौख्य-
स्फातिः प्रीणाति चित्तं प्रसरति परितः सौख्यसौहित्यसिन्धुः ।
क्षीयन्ते रागरोषप्रभृतिरिपुभटाः सिद्धिसाम्राज्यलक्ष्मीः
स्यादृश्या यन्महिम्ना विनयशुचिधियो भावनास्ताः श्रयध्वम् ॥ २ ॥

व्याख्या—भो भव्या यन्महिम्ना यासां सुभावितसद्भावनानां महिमा प्रभावः स तथा तेन महिम्ना हेतुना । दुर्ध्यानप्रेतपीडा मनाक् न प्रभवति दुष्टे ध्याने आर्तरौद्ररूपे दुर्ध्याने ते एव प्रेतौ पिशाचौ ताभ्यां समुत्पादिता या पीडा कष्टविशेषः सा मनाक् लेशमात्रापि न प्रभवति न पराभवं कर्तुं शक्नोति । तथा काचिदद्वन्द्वसौख्यस्फातिश्चित्तं प्रीणाति काचिदनिर्वचनीया अद्वन्द्वसौख्यस्फातिः अद्वितीयसुखभाववृद्धिः चित्तं मानसं प्रीणाति पोषयति । तथा सौख्यसौ-

ह्लिप्तसिन्धुः परितः प्रसरति सुखजावतृप्तिसमुद्रः सर्वतो दिक्षु विदिक्षु प्रसरति विस्तरति । तथा रागरोषप्रभृतिरिपुजटाः क्षीयन्ते रागद्वेषकामदर्पलोभमायामोहादिरूपकर्मशत्रुसैन्यं नाशं यांति । सिद्धिसाम्राज्यलक्ष्मीर्वश्या स्यात् एकच्छत्रमोक्षराज्यरूपात्मर्द्धिः स्वाधीना स्यात् । ताः प्रोक्तप्रजाया जावना अनित्यताद्याः पूर्वप्रदर्शिताः । विनयशुचिधियो विनीततापरिणामप्रक्षालितबुद्धयः सन्तः । श्रयध्वं यूयं जजतेत्यर्थः ॥ २ ॥

( पथ्यावृत्तम् )

श्रीहीरविजयसूरीश्वरशिष्यौ सोदरावजूतां द्वौ । श्रीसोमविजयवाचकवाचकवरकीर्तिविजयाख्यौ ॥३॥

व्याख्या—श्रीहीरविजयसूरीश्वरस्य शिष्यौ विनेयौ श्रीसोमविजयवाचकश्रीकीर्तिविजयवाचकाख्यौ द्वौ तौ द्वौ पाठकौ सोदरौ समानोदरजातौ गृहित्वेऽपि भ्रातरौ । अजूतामजायेतामित्यर्थः ॥ ३ ॥

( गीतिद्वयम् )

तत्र च कीर्तिविजयवाचकशिष्योपाध्यायविनयविजयेन । शान्तसुधारसनामा संदृष्टो जावनाप्रबन्धोऽयम्

व्याख्या—चः पादपूरणे । तत्र तयोर्मध्ये श्रीकीर्तिविजयवाचकशिष्येण उपाध्यायविनयविजयाख्येन । अयमनन्तरप्रोक्तः । शान्तसुधारसनामा शान्तसुधारसाभिधानः । जावनाप्रबन्धो जावनानामर्थरचनामयो ग्रन्थः संदृष्टो विलोकितः कथित इत्यर्थः ॥ ४ ॥

शिखिनयनसिन्धुशशिमितवर्षे हर्षेण गन्धपुरनगरे। श्रीविजयप्रभसूरिप्रसादतो यत्न एष सफलोऽभूत् ५

व्याख्या—एष प्रोक्तग्रन्थरचनात्मकः यत्न उद्यमः । शिखि ३ नयन २ सिन्धु ७ शशि १ मितवर्षे सप्तदशशते त्रयोविंशे वर्षे गन्धपुरनगरे गन्धारबन्दरे श्रीविजयप्रभसूरिप्रसादतः तेषां प्रवर्त्यमाने समये हर्षेण सानन्देन सफलोऽभूत् फलवत्तां प्राप्त इत्यर्थः ॥ ५ ॥

( उपजातिवृत्तम् )

यथा विधुः षोडशभिः कलाभिः संपूर्णतामेत्य जगत्पुनीते ।
ग्रन्थस्तथा षोडशभिः प्रकाशैरयं समग्रैः शिवमातनोतु ॥ ६ ॥

व्याख्या—यथा येन न्यायेन विधुश्चन्द्रः षोडशभिः कलाभिः षोडशसंख्याप्रमिताभिः कलाभिः स्वविमानविभागैः संपूर्णतामेत्य राहोरावरणतां विहाय स्वविमानस्य सकलां प्रभां प्राप्य जगत् पुनीते निखिलभूमंडलमानन्दयति प्रकाशयति । तथा तेनैव न्यायेनायं ग्रन्थः शान्तसुधारसशास्त्रं भव्यानां समग्रैः समस्तैः षोडशभिः प्रकाशैः पूर्वोक्तैः शिवं मोक्षं कल्याणपरंपरां च आतनोतु विस्तारयत्वित्यर्थः ॥ ६ ॥

( इन्द्रवज्रावृत्तम् )

यावज्जगत्येष सहस्रभानुः पीयूषभानुश्च सदोदयेते ।
तावत्सतामेतदपि प्रमोदं ज्योतिःस्फुरद्वाङ्मयमातनोतु ॥ ७ ॥

व्याख्या—यावत्कालपर्यन्तं एष दृश्यमानो जगत्प्रसिद्धः सहस्रभानुः सहस्रकिरणः सूर्यः, पीयूषभानुश्च सुधारश्मिश्चन्द्रः जगति नूमंडले सदा निरन्तरं उदयेते प्रकाशं कुर्वाते। तावदेतदपि वाङ्मयं शास्त्रं स्फुरज्ज्योतिः सदाविलसज्ज्ञानं सत्पुरुषाणां प्रमोदमानन्दं आतनोतु विस्तारयत्वित्यर्थः ॥ ९ ॥

श्रीबुद्धिविजयविनेयौ मुक्तिवृद्धिविजययुतगणधुर्यौ । मुनिपश्रीवृद्धिविजयशिष्याणुना बुधगंभीरविजयेन ॥
शान्तसुधारसपानश्रद्धामुग्धेन दृब्धेयं टीका । वसुरसाहिकुलचन्द्रमितवर्षे निजपरोपकृते च भक्त्या ॥

॥ इति श्रीतपागच्छीयसंविग्नशाखीयपरममुनिश्रीबुद्धिविजयमुख्यशिष्यश्रीमुक्तिविजयगणिसतीर्थ्यतिलकमुनिश्रीवृद्धिविजयचरणयुगसेविना पंडितगंभीरविजयगणिना विरचिता शान्तसुधारसटीका ॥

---

Published by Shah Kuvarji Anandaji, for Jain Dharmaprasarak Sabha Bhavanagar.
Printed by R. Y. Shedge, at the Nirnaya-sagar Press, 23, Kolbhat Lane, Bombay.

शिखिनयनसिन्धुशशिमितवर्षे हर्षेण गन्धपुरनगरे। श्रीविजयप्रभसूरिप्रसादतो यत्न एष सफलोऽभूत् ५

व्याख्या—एष प्रोक्तग्रन्थरचनात्मकः यत्न उद्यमः। शिखि ३ नयन २ सिन्धु ७ शशि १ मितवर्षे सप्तदशशते त्रयोविंशे वर्षे गन्धपुरनगरे गन्धारबन्दरे श्रीविजयप्रभसूरिप्रसादतः तेषां प्रतप्यमाने समये हर्षेण सानन्देन सफलोऽभूत् फलवत्तां प्राप्त इत्यर्थः ॥ ५ ॥

( उपजातिवृत्तम् )

यथा विधुः षोडशभिः कलाभिः संपूर्णतामेत्य जगत्पुनीते।
ग्रन्थस्तथा षोडशभिः प्रकाशैरयं समग्रैः शिवमातनोतु ॥ ६ ॥

व्याख्या—यथा येन न्यायेन विधुश्चन्द्रः षोडशभिः कलाभिः षोडशसंख्याप्रमिताभिः कलाभिः स्वविमानविभागैः संपूर्णतामेत्य राहोरावरणतां विहाय स्वविमानस्य सकलां प्रभां प्राप्य जगत् पुनीते निखिलभूमण्डलमानन्दयति प्रकाशयति। तथा तेनैव न्यायेनायं ग्रन्थः शान्तसुधारसशास्त्रं भव्यानां समग्रैः समस्तैः षोडशभिः प्रकाशैः पूर्वोक्तैः शिवं मोक्षं कल्याणपरंपरां च आतनोतु विस्तारयत्वित्यर्थः॥ ६ ॥

( इन्द्रवज्रावृत्तम् )

यावज्जगत्येष सहस्रभानुः पीयूषभानुश्च सदोदयेते।
तावत्सतामेतदपि प्रमोदं ज्योतिःस्फुरद्वाङ्मयमातनोतु ॥ ७ ॥

## बलवानिति ६४ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्(1)यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः कपिलवस्तुनि विहरति न्यग्रोधारामे । कपिलवस्तुन्यन्यतम शाक्य आढ्यो महाधनो महाभोगो (विस्तीर्णो)(2) विशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तेन सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः पुत्रो जातो(3) ऽभिरूपो दर्शनीयः प्रासादिको(4) ऽतिजातबलोपपन्नः ॥ तस्य ज्ञातयो ज्ञातिमहं कृत्वा नामधेयं व्यवस्थाप्यन्ते किं भवतु दारकस्य नामेति । ज्ञातय ऊचुर्यस्मादयं दारको बलवान्प्राप्तं(5) स्यादस्य बलवानिति नाम ॥ बलवान्दारको(6) ऽष्टाभ्यो धात्रीभ्यो दत्तो द्वाभ्या-

---

1) B सार्थवाहैर्देव°, DP corr

2) P fills up the gap

3) MS जातः । अभि°, and प्रासादिकः अति°

4) Ex conject., MS अतिजातयोरूपस्य As to my correction cp Feer's translation (p 244, 18) «dont la force dépassait celle de l'homme»

5) Ex conject., *prāptam* signifies 'fit, proper' (PW s v आप् + प्र, sign. 9 of the participle), MS प्राप्त स्यादस्यबलवानिति नाम भवतु । I have left out भवतु, taking this word for a gloss of प्राप्तं स्यात्

6) MS °रकष्टा°, cp supra p 345, n 8

भगवानाह । किं मन्यध्वे भिक्षवो योऽसौ तेन कालेन तेन समयेन दरिद्रः पुरुष आसीदयं स[1] वपुष्मान् । यतस्तेन स्तूपः संमृष्टः तेनाभिरूपः संवृत्तो यत्प्रणिधानं कृतं तेनेह जन्मन्यर्हत्त्वं साक्षात्कृतम् । इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाकः एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्[2]भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) MS सः वपु°

2) B इदमवाच°, DCP corr

## बलवानिति ६४ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्[1]देवैर्नागै(61a)र्यक्षैरसुरैर्गरुडैः किंनरैर्महोरगैरिति देवनागयक्षासुरगरुडकिंनरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः कपिलवस्तुनि विहरति न्यग्रोधारामे । कपिलवस्तुन्यन्यतमः शाक्य आढ्यो महाधनो महाभोगो [2]‹विस्तीर्ण›विशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तेन सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः पुत्रो जातो[3] ऽभिरूपो दर्शनीयः प्रासादिको [4]ऽतिक्रान्तपौरुषबलः ॥ तस्य जातौ जातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दारकस्य नामेति । ज्ञातय ऊचुर्यस्मादयं दारको बलवान्प्राप्तं[5] स्यादस्य बलवानिति नाम ॥ बलवान्दारको [6]ऽष्टाभ्यो धात्रीभ्यो दत्तो द्वाभ्याम्

---

1) B सार्थवाहैर्दे°, DP corr

2) P fills up the gap

3) MS ज्ञात । ऽभि°, and प्रासादिक ऽति°

4) Ex conject., MS ऽतिक्रान्तपौरुषस्य As to my correction cp Feer's translation (p 244, 18) «dont la force dépassant celle de l'homme»

5) Ex conject., prāptam signifies 'fit, proper' (PW s v प्राप् + प्र, sign. 9 of the participle) MS प्राप्तं स्यादस्य बलवानिति नाम भवतु । I have left out भवतु taking this word for a gloss of प्राप्तं स्यात्

6) MS °दुरपष्टा°, cp supra p 345, n. 5

भगवानाह । किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन दरिद्रः पुरुष आसीदयं स[1] वपुष्मान् । यतस्तेन स्तूपः संमृष्टस्तेनाभिरूपः संवृत्तो यत्प्रणिधानं कृतं तेनेह जन्मन्यर्हत्त्वं साक्षात्कृतम् । इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाकः एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्[2]भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) MS सः वपु°

2) B इदमवाच°, DCP corr

## बलवानिति ६४ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागै[1]र्यक्षैरसुरैर्गरुडैः किंनरैर्महोरगैरिति देवनागयक्षासुरगरुडकिंनरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः कपिलवस्तुनि विहरति न्यग्रोधारामे । कपिलवस्तुन्यन्यतमः शाक्य आढ्यो महाधनो महाभोगो ‹विस्तीर्ण›[2]विशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तेन सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः पुत्रो जातो[3] ऽभिरूपो दर्शनीयः प्रासादिको[4] ऽतिबलातिमानुषबलः ॥ तस्य जातौ जातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दारकस्य नामेति । ज्ञातय ऊचुर्यस्मादयं दारको बलवान्प्राप्तं[5] स्यादस्य बलवानिति नाम ॥ बलवान्दारको[6] ऽष्टाभ्यो धात्रीभ्यो दत्तो द्वाभ्या-

---

1) B सार्थवाहैर्दे°, DP corr

2) P fills up the gap

3) MS ज्ञातः । अभि°, and प्रासादिकः बलि°

4) Ex conject., MS बलितमानुषरूपस्य As to my correction cp Feer's translation (p 214, 15) «dont la force dépassait celle de l'homme».

5) Ex conject., *prāptam* signifies 'fit, proper' (PW s. v. आप् + प्र, sign. 9 of the participle), MS प्राप्त. स्यादस्यबलवानिति नाम भवतु । *I have left out* भवतु, *taking this word for a gloss of* प्राप्तं स्यात्

6) MS °ऽष्टाभ्या°, cp supra p. 343, n. 8